कदाचिच्चन्द्रमौलिरिव मदनबाणासनातिमुक्तकशरसंछादितायां पर्वतभुवि विजहार ॥ क ॥

कदाचिदच्युत इव शिशिरकमलाकरावगाहनोत्पन्नपुलककोरकिततनुरनन्तभोगभाक्सुखमन्वतिष्ठत् ॥ ख ॥

कदाचिन्नलिनयोनिरिव राजसभावस्थितः प्रजाव्यापारमचिन्तयत् ॥ ग ॥

कदाचिन्मयूर इव कान्तोन्नमत्पयोधरमण्डलीविलासेन हर्षमभजत् ॥ घ ॥

कदाचिन्नक्षत्रराशिरिवाश्विन्या सेनया समन्वितो मृगानुसारी बहुशष्पवनमार्गे बभ्राम ॥ ङ ॥

हरेर्विष्णोर्वाहनविलासो यानलीला ॥ ख ॥

कदाचिदिति ॥ मदनो बाणोऽसनोऽतिमुक्तकः शरश्च मुञ्ज एभिर्वृक्षैः सम्यक्छादितायां पर्वतक्षोण्याम् । पक्षे मदनः कामस्तस्य बाणासनं धनुस्तत्प्रक्षिप्तैः शरैर्बाणैर्विधुरायां पर्वतभुवि । पर्वताद्भवति स्मेति पार्वत्याम् ॥ क ॥

कदाचिदिति ॥ कमलानामाकरो वनम् । पक्षे कमलायाः श्रियाः करः पाणिः ॥ अनन्ताभोगोऽनेकविलासः शेषाहिवपुश्च ॥ ख ॥

कदाचिदिति ॥ राज्ञः सभा । पक्षे रजसा गुणेन निर्वृत्ते भावे स्थितः ॥ व्यापारो व्यवहारो निर्माणं च ॥ ग ॥

कदाचिदिति ॥ कान्ताङ्गना काम्या च ॥ पयोधरः स्तनो मेघश्च ॥ विलास उपभोगः स्फुरणं च ॥ घ ॥

कदाचिदिति ॥ अश्वाः सन्त्यस्यां तया सेनया युक्तः । तथा मृगानुगामी बहुबालतृणपथेऽभ्राम्यत् ॥ पक्षे अश्विनीमृगौ नक्षत्रे । इनेन रविणा सह सेनयेत्यश्विनीविशेषणम् ॥ बहुश इति भिन्नम् । पवनमार्गो द्यौः ॥ अत्र पकारात्प्राग्विसर्जनीय उपध्मानीयो वा ॥ शष्पपदे तु षकार एव ॥ तदेवंरूपभेदेऽपि श्रुतिसाम्यान्न दोष इति कविसमयः ॥ तथा च चण्डदासकृते श्रीचण्डिकाचरिते महाकाव्ये—"पुष्पादपामिह सदाधिगमे समृद्ध्यापुष्पादपाः फलभराच्च विनम्रभावम् । पुष्पादपापि दधतो मुनिवत्सुजन्मापुष्पादपाति मधु साधु मधुव्रतौघाः" ॥ अस्यार्थः—अपां जलानाम् । अधिगमे

---

१ सहितः. २ बहुशष्पवनमार्गे.

**कदाचिद्राजनेय इवाक्षविनोदमन्वतिष्ठत् ॥ क ॥**

**कदाचिद्वानरेश्वर इव सुग्रीवो वैदेहीति ब्रुवाणस्यालघुकाकुत्स्थस्यार्थिनः प्रार्थना क्रियतां सफलेति वानरपुंगवानादिदेश ॥ ख ॥**

**कदाचिन्मकरकेतन इव सुमनसो मार्गणान्विधाय स्वंगुणं[1] कर्णपूरीचकार ॥ ग ॥**

प्राप्तौ सत्याम् । पुष्पात्कुसुमात् । फलभरात्फलातिशयात् च या समृद्धिस्तया । पादपास्तरवो विनम्रभावमापुः ॥ समृद्धौ हि नम्रता स्यात् ॥ जलाधिगमः पुष्पफलानां हेतुः । तानि च समृद्धेः । सा च नम्रताया इति ॥ तथा पुष्पाणामत्रक्षणं यत्र । तथाऽपापि पापरहितम् । शोभनं जन्म यथा मुनयो दधति । तद्वदेतेऽपि मधुव्रतौघाः सुजन्म धारयन्तः सन्तो मधुमकरन्दमपुः पिबन्ति स्म ॥ पादैरङ्घ्रिभिः पादेषु मूलेषु वा पतन्त्यभीक्ष्णमित्यनेन मधुप्राचुर्योक्तिः ॥ अत्रायुक्पादयोः षकार एव । युक्पादयोस्तु विसर्जनीयोपध्मानीयान्यतर एव न तु षकारः ॥ परं श्रुतिसाम्यान्न दोषः ॥ एवमेव विसर्जनीयजिह्वामूलीयषकारेष्वपि यथा "ये सहजनिष्कलङ्काचारा अपि भान्ति निस्त्रिकूटगमात् । सुधियः काष्ठादशकंधराधिकं सपदि तेऽश्नुवते" ॥ अस्यार्थः—सहजोऽकृत्रिमो निःकलङ्को निर्दोष आचारो येषां ते सुधियः काष्ठादशकं दिक्चक्रं धरैः पर्वतैरधिकमश्नुवते व्याप्नुवन्ति । स्त्रीणामभावो निस्त्रि । कूटं छद्म । तस्य गमो भ्रंशः इति समाहारद्वन्द्वः । एतेन जितेन्द्रियत्वोक्तिः । अपिर्विरोधे । येषां किल सहजस्वर्णाया लङ्कायां चारो गतिः । ते कथं त्रिकूटाचलगमनाभावेन भान्ति । दशकंधरो रावणः । काष्ठा दिशः । अत्र स्वर्णार्थनिष्कशब्दे षकार एव, निष्कलङ्कशब्दे जिह्वामूलीयविसर्गौ इति बोध्यम् ॥ क ॥

**कदाचिदिति** ॥ अक्षैः पाशकैः । विनोदं क्रीडाम् ॥ पक्षे अक्षस्य रावणेः । विनोदं वधम् ॥ क ॥

**कदाचिदिति** ॥ शोभना ग्रीवा यस्य । वै स्फुटार्थे । मह्यं देहीति ब्रुवाणस्य । तथा आ समन्ताल्लघ्व्यां काकौ भिन्नकण्ठध्वनौ तिष्ठतीत्यालघुकाकुत्स्थस्तस्य याच्ञावशात्स्वरभेदवतोऽर्थिनो याचकस्य प्रार्थना सफला क्रियतामित्यमुना प्रकारेण नरपुंगवान्नरश्रेष्ठानादिष्टवान् ॥ वा समुच्चये ॥ पक्षे वैदेही सीतेति प्रलपतोऽलघोर्गुरो रामस्य काकुत्स्थस्य सप्रयोजनस्य प्रार्थना सफला क्रियतामिति वानरपुंगवान्कपीशः सुग्रीवो नियुक्तवान् ॥ ख ॥

**कदाचिदिति** ॥ मार्गणान्याचकान् । इष्टार्थसंप्रदानेन सौमनस्ययुक्तान्विधाय स्वस्य

---

1 स्वस्य गुणम्.

कदाचिदम्भोनिधिरिवोच्चैःस्तननाभिरम्याः, कृतानिमेषनयनविभ्रमाः, सकंदर्पाः, सिषेवे वेलाविलासिनीः ॥ क ॥

कदाचिद्दशरथ इवायोध्यायां पुरि स्थितः सुमित्रोपेतो रममाणरामभरतप्रेक्षणेन क्षणमाह्लादमन्वभूत् ॥ ख ॥

एवमस्य सकलजीवलोकसुखसंतानमनुभवतो यान्ति दिनानि॥ग

अथ कदाचिदुन्नमत्पयोधरान्तरपतद्धारावलीविराजिताः, कमलदलकान्तनयनाः, सुरचापचक्रवक्रभ्रुवः, विद्युन्मणिमेखलालंकारधारिण्यः, शिञ्जानामुक्तकलहंसकाः, प्रौढकरेणुसंचारहारिण्यः, कम्रकंधराः, तिरस्कृतशशाङ्ककान्तिकलापोच्चमुखमण्डलाः, सकलजगज्जेगीयमानगुणमिममनुपमरूपलावण्यराशिराजितं राजानमवलोकयितुमिवावतरन्ति स्म वर्षाः ॥ घ ॥

गुणं त्यागाख्यं जगतोऽपि कर्णौ पूर्येते अनेनेति कर्णपूरः । चक्रौ कर्णपूरीचकार ॥ पक्षे सुमनसः पुष्पाणि । मार्गणा बाणाः । गुणो ज्या । कर्णपूरः कर्णान्तकर्षणम् ॥ ग ॥

कदाचिदिति ॥ उच्चैःस्तनाभ्यां नाभ्या च रम्या ॥ तथा निर्निमेषनेत्रलीलाः सकामाः । वेलायां वारके विलसन्ति भोगायोपतिष्ठन्त इत्येवंशीला वारस्त्रीः । सिषेवे॥अम्भोनिधिस्तु वेला अम्भोवृद्धीः । कीदृशीस्ताः । उच्चैःस्तननेन शब्देनाभिरम्याः॥तथा कृतमनिमेषाणां मत्स्यानां नयनं प्रापणं यैस्तथोक्ता विविधा भ्रमा आवर्ता यासु ॥ तथा कं जलं तस्य दर्पेण मोक्षेण सह ॥ दर्पेर्मोचनार्थत्वात् ॥ तथा विलसन्त्यभीक्ष्णम् ॥ क ॥

कदाचिदिति ॥ न योद्धुं शक्याऽयोध्या संज्ञा च । तस्यां पुरि । सुमित्रैरुपेतः सुमित्रया कलत्रेण ॥ विलसन्त्यो रामा विलासिन्यो यत्र तेन भरतसंगीतेन विक्रीडद्रामभरतयोरवलोकनेन चाह्लादं नलो दशरथश्च भेजे ॥ ख ॥ ग ॥

अथेति ॥ अनन्तरं कस्मिन्नपि समये नृपमवेक्षितुं वर्षा अवातरन् ॥ वर्षाशब्दगतस्त्रीत्वेन वर्षाणां साक्षात्स्त्रीत्वमध्यवसितम् ॥ ततश्च पयोधरा मेघाः स्तनाश्च । पतद्धारावली पतन्ती धाराश्रेणी चलन्ती हारावली च । यद्वा पयोधरयोः स्तनयोरन्तर्मध्येऽपतन्तोऽतिसंहतत्वादप्रविशन्तो हारा यासाम् । तथा वलीभिरुदरे लेखाभिर्विराजिताः ॥ कमलदलानां कान्तमिष्टं नयनमतिवाहनं यासाम् । वर्षाणां ह्यतिवाहने कमलानामुल्लासः । पक्षे कमलदलवत्कान्तनेत्राः ॥ इन्द्रधनुश्चक्रमेव वक्रे भ्रुवौ यासाम् ।

१ कृतानिमिष. २ हंसकाः. ३ गुणग्रामम्. ४ वर्षाङ्गनाः.

यत्र च।

आकर्ण्य स्मरयौवराज्यपटहं जीमूतमूलध्वनिं
नृत्यत्केकिकुटुम्बकस्य दधतं मन्द्रां मृदङ्गक्रियाम्।
उन्मीलन्नवनीलकन्दलदलव्याजेन रोमाञ्चिता
हर्षेणेव समुच्छ्रिता वसुमती दध्रे शिलीन्ध्रध्वजान्॥४०॥

अपिच।

पर्णैः कर्णपुटायितैर्नवरसप्राग्भारविस्फारितैः
शृण्वन्तो मधुरं द्युमण्डलमिलन्मेघावलीगर्जितम्।
शाखाग्रग्रथमानसौरभभरभ्रान्तालिपालिध्वजा-
स्तोषेणेव वहन्ति पुष्पपुलकं धाराकदम्बद्रुमाः॥४१॥

पक्षे सुरचापचक्रवद्वक्रभ्रुवः॥ विद्युदेव मणिमेखला तां तथालमत्यर्थं कस्य जलस्या-रं वेगं धारयन्ति। यद्वा कारस्य राज्ञे देयांशस्य धारिण्यः। वर्षा हि सस्यादिसाधक-त्वात्करस्यापि साधनम्। पक्षे विद्योतमानमणिकाञ्चीभूषणधारिण्यः॥ शिञ्जाना गर्ज-न्त्यस्तथा मुक्ता मानसं प्रति प्रस्थापिता हंसका याभिः। यद्वा मुक्तहंसानि कानि जलानि यासु। तत्समये हंसानां मानसे गमनात्। पक्षे शिञ्जाने शब्दायमाने आमुक्ते बद्धे हंसके चरणाभरणे यासाम्॥ प्रकर्षेणोढं कं जलं तेन रजःसंचाररोधिकाः। पक्षे प्रगल्भगजग-मनमनोज्ञाः॥ कं जलं धरन्तीति कंधरा मेघास्ते कम्रा रम्या यासु। पक्षे कंधरा ग्रीवा॥ छादितशशाङ्ककान्तयः। तथा काय पानीयाय लापाः कलापाः। कुटुम्बिनीजनगीय-मानरासकाः। तैरुन्मुखा मेघालोकनायोन्मुखा मण्डला देशा यासु। पश्चात्कर्मधारयः। पक्षे निर्जितेन्दुदीप्त्यतिशयमुच्चमुत्कृष्टमुन्नतकपोलं वा मुखबिम्बं यासाम्॥ ३९॥

**आकर्ण्येति**॥ युवा चासौ राजा चेति युवराजस्तस्य भावो यौवराज्यम्। का-मस्य तरुणराजत्वपटहोपमं नृत्यत्केकिनां च मृदङ्गविधिं दधानं घनगर्जितं श्रुत्वा मुदे-व विकसत्कन्दलच्छलेन पुलकिता भूरभूत्। शिलीन्ध्रध्वजानधारयत्॥४०॥

**पर्णैरिति**॥ वसन्ते पुष्प्यन्ति ते धूलीकदम्बा वर्षासु च धाराकदम्बाः॥ शाखा-ग्रे मिलन्तः सौरभभराक्रान्ता उपर्युपर्यटन्तश्च तेऽलयश्च त एव पालिध्वजाः प्रसि-द्धचिह्नानि येषां ते धाराकदम्बद्रुमाः पुष्पमेव पुलकं मदेन वहन्ति॥ हर्षहेतुर्गर्ज-

1 यत्र. 2 कदम्बकस्य. 3 समुच्छ्रितान्.

अथ[1] क्रमेण

नीरं नीरजनिर्मुक्तं नीरजस्कं भुवस्तलम् ॥
जातं जातिलतापुष्पगन्धान्धमधुपं वनम् ॥ ४२ ॥

अपिच । 48132

धुत[2]कदम्बकदम्बकनिष्पतन्नवपरागपरागममन्थराः ।
हृत[3]तुषारतुषा रतिरागिणां प्रियतमा मरुतो मरुतो ववुः ॥४३॥

ततश्च । तिरस्कृततरणित्विषि, विगलद्वारिविप्रुषि, शान्तचातककतृषि, निर्वाणवारणवपुषि, मानिनीमानग्रहग्रन्थिमुषि, जनितजवासकशुषि, विधुर[4]वधूविद्विषि, वर्धितमण्डूकरुद्दषि, मुद्रितचन्द्रमसि, विद्राणपङ्कजसरसि, स्वाधीनप्रियप्रेयसि, प्रोषितकलहंसवयसि, नष्टनक्षत्रमण्डलमहसि, मेचकितनभसि, निष्पतन्नीपरजसि, स्फुटकुटज[5]रजः पुञ्जपिञ्जरिताष्टदि[6]ग्भासि, भासुरसुरचापचक्रभृति,

नश्रवणमेव । रसो जलं रागश्च । अन्योऽपि द्युमण्डलान्मिलन्त्या योषितः शब्दं श्रुत्वैवंविधो भवति "ग्रन्थ बन्धन" इति यौजादिकाद्विकल्पिते णिचि ग्रथितुं शीलमेषामिति चानशि ग्रथमानाः । यत्कविरहस्ये "गाथां ग्रन्थयति ग्रथत्यविरतं श्लोकांश्च लोकेत्तरान्गद्यं ग्राथयति स्फुटार्थललितं यो नाटकं ग्रन्थति । ग्रथ्नाति श्रुतिशास्त्रयोर्विवरणं ग्रन्थाननेकांश्च यः स्वच्छं यस्य मनः स्वभावसरलं न ग्रन्थते कुत्रचित्" इति । अस्मादात्मनेपदमपि । तथा च । "वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः । मुसलमिदमियं च पातकाले मुहुरनुयाति कलेन हुंकृतेन" इति ॥ ४१ ॥

नीरमिति ॥ नीरं जलमम्भोजमुक्तं भूतलं निःपांसु वनं च जातीपुष्पसौरभान्धभृङ्गं जातम् ॥ ४२ ॥

धुतेति ॥ कम्पितकदम्बद्रुमसमूहाभिःसरन्योऽसौ नवः परागस्तत्संगमेन मन्थरा मन्दाः ॥ तथा ऊढसीकरकणाः ॥ तथा रतिरागोऽस्ति येषां तेषामतिदयिता मरुतो वाता मरोः पर्वताद्वान्ति स्म ॥ परागमेति परापूर्वः पर उत्कृष्ट आगमो वा ॥४३॥

ततश्चेति ॥ तिरस्कृता रवित्विषो येन । इन्द्रगोपा वर्षासु जाताः क्षुद्रजन्तवः ॥ ज्योतिरक्षरत्नमालानां संबन्धि यद्वारागृहं तस्य सदृशि ॥ क्षीरोदधौ निद्रायमाणो बाणासुरबाहु-

---

१ अथ क्रमेणेति क्वचित्पुस्तके नास्ति. २ मधुकदम्ब. ३ धूत. ४ विरहिवधू. ५ कुसुमरजः. ६ दिग्भागभासि.

मयूरमदकृति, महिषशोपल्हति, विस्तरत्सरिति, शाद्वलहरिति, विद्योतमानविद्युति, वहन्मन्दमेघंकरमरुति, हृष्यत्कृषाणयोषिति, पुष्प्यत्केतकीगन्धपानमत्तमधुकृति, प्रोद्भूतभूरुहि, दरिद्रनिद्राद्रुहि, सगर्वगोदुहि, कदम्बस्तम्बालम्बिमधुलिहि, मुदितमदनाट्टहासाय-मानघननादमुचि, पच्यमानजम्बूफलश्यामलितवनान्तररुचि, र-चितपान्थसार्थशुचि, श्रूयमाणमदमधुरमयूरवाचि, विनिद्रकोशा-तकीशालिनि, यूथिकाजालिनि, नवमालिकामालिनि, कन्द-लभाजि, पच्यमानजम्बूतरुवनराजिभ्राजि, भिक्षाक्षणक्षपितपरि-व्राजि, शान्तसारङ्गरुजि, नीडनिर्माणाकुलबलिभुजि, सान्द्रेन्द्र-गोपभुजि, श्च्योतत्तमालधारागृहसदृशि, श्यामायमानदशदिशि, दिवापि श्रूयमाणरजनिशङ्काकुलचक्रवाकचक्रकुशि, शकटसंचाररु-धि, पल्लवितवीरुधि, विश्रान्तजिष्णुक्ष्मापालयुधि, क्षीणोक्षक्षुधि, क्षीरसमुद्रनिद्राणबाणबाहुच्छिदि, सिन्धुरोधोभिदि, दवदहनतुदि, विरहिमनस्तुदि, जनितजनमुदि, तापिच्छच्छायानुच्छेदिनि, छन्न-कुटीमध्यबध्यमानवाजिनि, विकसितबकुलवनविराजिनि, सीर-सीमन्तितग्रामसीमनि, विजयमानमनोजन्मनि जाते जगज्जीवि-नि, जीमूतसमये कदाचिदनम्भसि दिवसे मृगयावमपालकः प्र-विश्य राजानं विज्ञापयामास ॥ क ॥

“ देव,

किं स्यादञ्जनपर्वतः स्फटिकयोर्द्वन्द्वं दधद्दीर्घयो-
रम्भोमेदुरमेघ एष किमुत श्लिष्यद्बलाकाद्वयः ।

च्छिद्भिदुष्णुर्यश्च ॥ सीमन्त इव सीमन्तः । ततः करोतिण्यन्तात्क्ते । तारकादित्वादितचि वा रूपम् ॥ तस्मिन्नित्थंभूते मेघसमय आखेटकारण्यपालको नृपं व्यज्ञापयत् ॥ क ॥

किं स्यादिति॥दीर्घस्फटिकद्वयोपेतोऽञ्जनगिरिः, बलाकाद्वयान्वितः सजलो जलदः,

---

१ मेघाङ्कमारुति. २ कुपित. ३ चक्रवाककुधि.

शून्यः किंनु करेण कुञ्जर इति भ्रान्तिं समुत्पादय-
न्दंष्ट्राद्वन्द्वकरालकालवदनः कोलः कुतोऽप्यागतः ॥४४॥

ततश्चासौ

भिन्दन्कन्दकसेरुकन्दलभृतः स्निग्धप्रदेशान्भुवो
भञ्जन्नञ्जनशैलशृङ्गसदृशः फुल्लल्लतामण्डपान् ॥
मन्दं मन्दरलीलयाब्धिसदृशं मथ्नंश्च लीलासरः
क्रोडः क्रीडति भापयन्निव भवत्क्रीडावने रक्षकान्"॥४५॥

राजा तु तदाकर्ण्य चिन्तितवान् ।

"अच्छाच्छैः शुकपिच्छगुच्छहरितैश्छन्ना वनान्तास्तृणैः
सेव्याः संप्रति सान्द्रचन्द्रकिकुलैरुत्ताण्डवैर्मण्डिताः ॥
येषु क्षीरविपाण्डु पल्वलपयः कल्लोलयन्तो मना-
ग्वाता वान्ति विनिद्रकेतकवनस्कन्धे लुठन्तः शनैः ॥ ४६ ॥

माद्यन्ति च तेषु संप्रति प्रोथिनः । तद्युज्यते विहर्तुम्" इ-
त्यवधारयन्नाहूय बाहुकनामानं सेनापतिमादिदेश ॥ क ॥

"भद्र द्रुतमनुष्ठीयताम्, समादिश्यन्तां कृतवैरिविपत्तयः
पत्तयः, पर्याण्यन्तां मनस्तुरगास्तुरगाः, सज्जीक्रियन्तां निजवेगनि-

शुण्डाशून्यो हस्ती, किमिति भ्रान्तिं जनयन्देव कुतोऽपि कोलः सूकर आगात् ॥४४॥

**भिन्दन्निति** ॥ मन्दरलीलया करणभूतया भापयन् ॥ अत्र करणान्वयेनात्वमा-
त्मनेपदं षुगागमश्च न भवति ॥ ४५ ॥

**अच्छाच्छैरिति** ॥ चन्द्रकिणो मयूराः । पल्वलमखातं सरः ॥ ४६ ॥

**माद्यन्तीति** ॥ प्रोथिनः सूकराः ॥ क ॥

**भद्रेति** ॥ पर्याणं करोत्यश्वानाम् । "तत्करोति तदाचष्टे" इति णिचि पर्याणय-
त्यश्वान् । पश्चात्संबन्धनिवृत्तौ व्याकरणं सूत्रयतीति त्रिलोकीं तिलकयतीतिवत्कर्म-

१ दंष्ट्रायुग्म. २ भापयन्; भीषयन्. ३ छन्नान्. ४ वनान्तान्. ५ वनेषु. ६ द्रुतं मद्वचनमनुष्ठी-
यताम्. ७ विनिर्जित.

जितमातरिश्वानः श्वानः, समारोप्यन्तामपनीताहितानूंषि धनूंषि, गृह्यन्तां निर्मथितप्रोथियूथपाशाः पाशाः" इति ॥ क ॥

अथ[1] मौलि[2]मिलन्मुकुलितकरकमलयुगलेन सेनापतिना "यदाज्ञापयति देवः" इत्यभिधाय त्वरया तथा कृते सति ॥ ख ॥

स्वयमपि

निर्मांसं मुखमण्डले परिमितं मध्ये लघुं कर्णयोः
स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्धं च रोमोद्गमे।
पीनं पश्चिमपार्श्वयोः पृथुतरं पृष्ठे प्रधानं जवे
राजा वाजिनमारुरोह सकलैर्युक्तं प्रशस्तैर्गुणैः[3] ॥ ४७ ॥

आरुह्य च क्रमेण कार्दमिककर्पटावनद्धमूर्धजैर्दण्डखण्डपाणिभिः क्रूरकर्मोचिताकारैर्वागुरावाहिभिरनन्तैः कृतान्तदूतैरिव पाशहस्तैः पा[4]पर्द्धिकैरनुगम्यमानः, दूरादुन्नमितकंधरैस्त[5]थोर्ध्वकर्णसंपुटैरकाण्डोड्डीनप्राणैरिव वनप्राणिभिराकर्ण्यमानहर्षितहयहेषारवः, पवनक[6]म्पिततरुशाखाग्रपल्लवव्या[7]जेन दूरादेवोत्क्षिप्तहस्ताभिरुड्डीयमानशकुनिकुलकोलाहलच्छलेन भयान्निवार्यमाण इव वनदेवताभिः, अभिमुखागतैरुन्मिषत्त[8]रुपुष्पप्रकरमकरन्दबिन्दुवर्षवाहिभिर्वनविनाशशङ्कितैरर्घ्यमिवोपपादयद्भिरुपरुध्यमान इव वनमारुतैः, उन्निद्रसान्द्रकुसुमकेसराङ्कुरजालजटिलाभिर्भयादु[9]द्गतरोमाञ्चप्रपञ्चाभिरिवोद्भ्रान्तभृ[10]ङ्गरवगद्गदरुदितेन निषिध्यमान इव वनवीरुद्भिः, उद्भिन्नभास्वद[11]मन्दकन्दलावलोकनेनानन्द्यमानः श्वानुगतो-

ध्वम् ॥ मन इव तुराः शीघ्रा गच्छन्तीति ॥ निर्मथिताः प्रोथियूथपानां वराहयूथपानामाशा इच्छा यैः ॥ क ॥ ख ॥ ४७ ॥

आरुह्य चेति ॥ कर्दमेन नीलीलोहमलादिना रक्तं कार्दमिकम्। श्वभिरश्वैश्चानु-

---

१ अथेति क्वचित्पुस्तके नास्ति. २ मौलिमण्डलमिलत्. ३ हयानां गुणैः. ४ पापर्द्धिकपुरुषैः. ५ स्तब्धोर्ध्वकर्ण. ६ प्रकम्पित. ७ व्याजेन. ८ तरुणतरु. ९ उद्भूत. १० भृङ्गाङ्गनारव. ११ अनन्त.

ऽश्वैश्चानुगतः सगजमप्यगजं तद्वनमाससाद ॥ क ॥

ततश्च केचिदुद्यत्परश्वधा गणपतयः, केऽपि दृष्टसिंहिकासुतविक्रमाः शशधराः, केऽपि पाशपाणयो जम्बुकदिक्पालाः, केऽपि हरिमार्गानुसारिणो बलभद्राः, केऽपि चक्रपाणयो मधुसूदनाः, केऽपि शिवागमानुवर्तिनो रौद्राः, केऽप्याहिताग्नयो विप्रलोकाः, केऽपि खण्डिताञ्जनाधरप्रवालाः प्रभञ्जनाः, केऽप्युत्खातदन्तिदन्तमुष्टयो निस्त्रिंशाः, तस्य पृथ्वीपतेराकुलितश्वापदाः पदातयो वनं रुरुधुः ॥ ख ॥

ततश्च तैः क्रियन्ते विकलभा वननिकुञ्जाः कुञ्जराश्च, ध्रियन्ते-

गतो राजा । गजोपेतम् । अगः पर्वतस्तत्समीपोद्देशोऽप्यगस्तत्र जातमगजं तद्वनमाप ॥ क ॥

**ततश्चेति** ॥ उद्यन्तः पलायमानाः परे उत्कृष्टाः श्वानस्तान्दधति ॥ तथा गणस्य सेनायाः पतयः हेरम्बाश्च उद्गृह्यमाणपरशवः ॥ सिंहिकासुतः केसरिकिशोरो राहुश्च । शशं धरतीति शशधरः पत्तिश्चन्द्रश्च ॥ पाशः पाणौ यस्य स पाशपाणिर्वरुणश्च ॥ जम्बुकः शृगालो वरुणश्च । यद्विश्वप्रकाशः—“ जम्बुकः फेरवे नीचे प्रतीचीदिक्पतावपि ” ॥ हरिं सिंहं मार्गं मृगसमूहं चानुसरन्ति । बलेन भद्राः शक्ताः । पक्षे हरेर्विष्णोर्मार्गोऽध्वा । बलभद्रो बलदेवः ॥ चक्रं पाणौ यस्य स चक्रपाणिर्विष्णुश्च । मधु क्षौद्रं दैत्यश्च । सूदनं क्षरणं मारणं च ॥ शिवा शृगाली तस्या गमो गतिः । पक्षे शिवस्यागमाः शास्त्राणि । रौद्रा भीषणाः शैवाश्च ॥ गृहीतहविर्भुजो वीक्ष्यशकुन्तान्प्रलोकयन्तः । पापर्द्धिका हि कपोतादिपातनाय तरूणामधस्तात्तापनीसंज्ञकामग्नीष्टिकां कुर्वन्ति । पक्षे साग्निहोत्रा विप्रलोकाः ॥ खण्डिता अञ्जनस्य पश्चिकपक्षिणोऽधरप्रवालाः पुच्छाधःपिच्छानि यैः । यद्वाऽञ्जनस्य शाखिनोऽधःपल्लवाः । वातास्तु खण्डितोऽञ्जनाख्यायाः प्रियाया ओष्ठपल्लवो यैः ॥ उत्खाता दन्तिदन्ता यैस्तथोक्ता मुष्टयः संग्रहा येषाम् । पक्षे उत्क्षिप्तदन्तिदन्तप्रधानो मुष्टिस्त्सरुर्येषु । निस्त्रिंशाः क्रूरकर्माणः खड्गाश्च । ईदृशास्तस्य पत्तयो वनं वेष्टयामासुः ॥ ख ॥

**ततश्चेति** ॥ विगताः कलभा येभ्यस्ते व्यपेतकरिपोताः । कुञ्जरास्तु विकलकान्तयं

1 केचिदुद्यतपरश्व; कतिचिदुद्यत्परश्वधा. 2 शिवागमानुसारिणो. 3 पल्लवाः.

ऽनेकधारयाभिपातिनः खड्गाः खड्गिनश्च, कम्पन्ते कूजन्तः कोद-ण्डदण्डा गण्डकाश्च, विक्षिप्यन्ते परितः शराः शरभाश्च, भज्यन्ते तरवस्तरक्षवश्च ॥ क ॥

क्षणेन च पतन्ति पीवरा वराहाः; सीदन्ति दन्तिनः, विरसं रसन्ति सातङ्का रङ्कवः, प्रकाशैलं शैलं भयादारोहन्ति रोहिताः, शरसंघातघूर्णिता यान्ति महीं महिषाः, दुर्गसंश्रयं श्रयन्ते तरलितनेत्राश्चित्रकाः, त्वरिततरं तरन्तीवोत्पतन्तो नभसि निजजवनिर्जिततुरंगाः कुरङ्गाः ॥ ख ॥

तत्र च व्यतिकरे

जाताकस्मिकविस्मयैः किमिदमित्याकर्ण्यमानः सुरैः
संत्रासोज्झितकर्णतालचलनान्दिग्दन्तिनः कम्पयन्।
जन्तूनां जनितज्वरः स मृगयाकोलाहलः कोऽप्यभू-
द्येनेदं स्फुटतीव निर्भरभृतं ब्रह्माण्डभाण्डोदरम् ॥ ४८ ॥

राजाप्येकशरप्रहारपातितमत्तमातङ्गः सर्वतो विहारिहरिहरिणशशकशम्बरवराहहननहेलया विचरन्नितस्ततस्तरुणतरतमालमञ्जरीजालनीलोद्धुषितस्कन्धकेसरमूर्ध्वस्तब्धकर्णसंपुटमश्वचक्राय क्रुध्यन्तमाघूर्णितघोणमनवरतकृतघनघोरघर्घररवमुत्क्षिप्तपुच्छगुच्छमभिमुखमेकस्मिन्नतिसान्द्रभद्रमुस्तास्तम्बभाजि पङ्किलपल्व-

भयादिति शेषः । खड्गा द्विधारत्वादनेकया धारया पतन्त्यभीक्ष्णम् । गण्डकास्तु रयेणातिपतन्ति । य उद्भिन्नशृङ्गाः प्रौढास्ते खड्गिनः । अतएव रयातिपातिनः ॥ त एव बालका गण्डकाः । अतएव कूजन्तः ॥ तरक्षवश्चित्रकाद्याः ॥ क ॥

क्षणेन चेति ॥ सातङ्काः सभयाः । रङ्कवो मृगाः ॥ प्रकाशाः स्पष्टा एला लता यत्र शैले । रोहितः श्वापदः ॥ चित्रकोऽपि तद्विशेषः ॥ ख ॥ ४८ ॥

---

१ धारया पातिनः. २ प्रकाशैरलम्. ३संघातघातघूर्णितायाम्. ४संश्रयन्ति. ५नेत्रानेत्रकाः. ६ विनिर्जित. ७ तरुणतमाल. ८ चक्रायोपरि; चक्रोपरि. ९कुप्यन्तम्. १०पुच्छम्. ११स्तम्बकदम्बभाजि.

लप्रदेशे तं शूरशूकरमपरमिव दवदहनदंग्धाद्रिमद्राक्षीत् ॥ क ॥

दृष्ट्वा च रचितशरसंधानलाघवो राघव इव राक्षसेश्वरस्य तस्योपरि परिणद्धविविधपत्रैः पतत्रिभिरभ्यवर्षत् ॥ ख ॥

तत्र च व्यतिकरे

किमश्वः पार्श्वेषु प्लवनचतुरः किंनु नृपतिः
शरान्मुञ्चन्नुच्चैश्चलतरकराकृष्टधनुषा ।
किमालोलः कोलः परिहृतशरः शौर्यरसिको
न जानीमस्तेषां क इह परमो वर्ण्यत इति ॥ ४९ ॥

अपिच ।

अजनि जनितपृथ्वीमण्डलोत्पातकम्पं
किमपि चलितशैलं द्वन्द्वयुद्धं तयोस्तत् ।
स्खलिततुरगवेगो विस्मयेनैव यस्मि-
न्दिनपतिरपि शौर्याश्चर्यसाक्षी बभूव ॥ ५० ॥
अथ कथमपि नाथं प्रोथियूथस्य जित्वा
ज्वरित इव विशालं सालसः सालमूले ।
सुखमभजत राजा राजमानः श्रमाम्भः-
कणकलितकपोलालोललीलालकेन ॥ ५१ ॥

तत्र च स्थितं श्रममुकुलितनयनारविन्दम्, आन्दोलयन्तः कुसुमिततरून्, तरलयन्तः शिखिशिखण्डमण्डलानि, ताण्डवय-

अजनीति ॥ स्वभावतोऽपि मध्यंदिने स्खलिताश्ववेगो रविस्तत्र कवेरूहः ॥५०॥
अथेति ॥ ज्वरित इव सालस इत्यनेन श्रमातिशयोक्तिः। अन्योऽपि ज्वरितो मूलादीनि सेवमानः स्वेदबिन्दुलक्ष्यमाणज्वरापगमो राजते ॥ ५१ ॥
तत्र चेति ॥ श्रममुकुलितनेत्रकमलं नृपं कम्पितनीपकाननाः पवना हर्षयांच-

---

१ दग्धमद्रिम्. २ स राजा दृष्ट्वा च. ३ पत्रिभि. ४ अभिववर्ष. ५ द्रुततर. ६ निपुणः. ७ हत्वा. ८ सालमूलम्. ९ तत्र स्थितम्.

* "दिवसस्याष्टमे भागे मन्दीभवति भास्कर" इति वसिष्ठोक्तेः ।

न्तस्तनुलतापल्लवनिवहान्, वहन्तो वहन्निर्झरजलशिशिरशीकरनि-
करान्, करालयन्तः कुटजकुड्मलानि, मकरन्दबिन्दुमुचो मन्दमा-
नन्दयामासुः कम्पितनीपवनाः पवनाः ॥ क ॥

अनन्तरमनवरतकरालकालकौलेयककुलकवलनाकुलितकोल-
करिकुरङ्गकण्ठीरवकिशोरपृष्ठपृष्ठधाविते परितः परिजने, जनित-
विविधमृगवधूवधव्याधीन्व्याधान्निवारयितुमिवान्तरान्तराप्रसारि-
तकरे मध्यस्थतां गतवति भगवति गभस्तिमालिनि, सहसंवर्धित-
मृगविनाशशोकभरादिव वनवीरुधां पतत्सु पुष्पलोचनेभ्यो बाष्पे-
ष्विव मध्याह्नोष्णविलीनमकरन्दबिन्दुषु, श्रूयमाणेषु वनदेवतानां
वनविमर्दोपालम्भेष्विव तरुखण्डोड्डीनविविधविहङ्गविरुतेषु, विघ-
ट्टितार्भककुरङ्गकुटुम्बिनीकरुणकूजितव्याजेनान्यायमिव पूत्कुर्वती-
षु वनराजिषु, इतस्ततः संचरच्चटुलतरतुरंगखुरशिखरशिखोत्खात-
धरणिमण्डलाह्वनविनाशवार्तां गगनचरेभ्यः कथयितुमिवोत्पतिते-
ऽम्बरतलमकृतपरित्राणे च मूर्छित इव पुनः पुनः पतति भुवि भव-
नपारावतपतत्रिपत्रधूसरे धूलिपटले, सकम्पकपिकलापोल्ललनलु-
लिततरुतरुणमञ्जरीपुञ्जनिकुञ्जोद्भेदिजिते मञ्जु गुञ्जति वनान्त-
रमपरमुच्चलिते चञ्चलचञ्चरीकचक्रवाले, चङ्क्रमणक्रमेण च संपन्ने
सैन्यस्य श्रमावसरे तस्यैव सरससरलशालद्रुमस्याधस्तान्निषण्णे
श्रमभाजि राजनि ॥ ख ॥—

कुः । कुटजकलिकानां करालनं विकासनम् ॥ क ॥

अनन्तरमिति ॥ कौलेयकः श्वा । कोलः सूकरः । पूत्करणमार्तव्याहरणम् ॥ख॥

---

१वहन्तो निर्झर. २ किसलयन्तः; कलयन्तः. ३ कौलेय. ४ पृष्ठतः प्रधाविते परिजने. ५मृगवध-
व्यधान्; मृगवधव्याधीन्. ६ हतेषु. ७ वनस्थलीषु. ८ खुरशिखोत्खात. ९ परित्राणावमूर्च्छित.
१० पुनः पतति. ११ कपिकुलकलापोल्ललनतरुणतरुमञ्जरी. १२ उद्विजिते. १३ सरसशाल
१४ अश्रमभाजि.

अकस्मात्कुतोऽपि

वलीवल्कपिनद्धधूसरशिराः स्कन्धे दधद्दण्डकं
ग्रीवालम्बितमृन्मणिः परिकुथत्कौपीनवासाः कृशः ।
एकः कोऽपि पटच्चरं चरणयोर्बद्ध्वाऽध्वगः श्रान्तवा-
नायातः क्रमुकत्वचा विरचितां भिक्षापुटीमुद्वहन् ॥ ५२ ॥

आगत्य च राजानमवलोक्य सविस्मयमेवमेष चिन्तयांचकार ॥ क ॥

अब्जश्रीसुभगं युगं नयनयोर्मौलिर्महोष्णीषवा-
नूर्णारोमसखं मुखं च शशिनः पूर्णस्य धत्ते श्रियम् ।
पद्मं पाणितले गले च सदृशं शङ्खस्य रेखात्रयं
तेजोऽप्यस्य यथा तथा सजलधेः कोऽप्येष भर्ता भुवः ॥ ५३ ॥

तदेवंविधाः खलु महनीया महानुभावा भवन्तीत्येवमवधार्य समुपसृत्य "स्वस्ति स्वकान्तिनिर्जितमकरध्वजाय तुभ्यम्" इत्यवादीत् ॥ ख ॥

राजापि सविस्मयमना मनागुन्नमितमस्तकः स्वागतप्रश्नेनाभिनन्द्य "तीर्थयात्रिक, कुतः प्रष्ठव्योऽसि । क्व च कियद्वाद्यापि गन्तव्यम् । उपविश । विश्रम्य कथय कांचिदपूर्वां किंवदन्तीम् । अ-

वलीति ॥ कुथितवती सटिते कौपीनवाससी यस्य । "परिकुथत्" इति पाठे कुथो वर्णकम्बलः । रथ्यानिपतितजरत्पटखण्डैर्निर्मितत्वात् ॥ पटच्चरो जीर्णवस्त्रखण्डम् ॥ क्रमुकत्वचा पूगद्रुमवल्केन ॥ ५२ ॥

अब्जेति ॥ सजलधेरिति भुवो विशेषणम् ॥ उष्णीषमुत्तमाङ्गे लक्षणविशेषः ॥ तथोर्णा भ्रूमध्ये शुभरोमावर्तः ॥ यद्विश्वः—"उष्णीषं तु शिरोवेष्टे किरीटे लक्षणान्तरे" । तथा । "ऊर्णा मेषादिलोम्नि स्यादन्तरावर्तके भ्रुवोः" ॥ ५३ ॥

१ सविस्मयमेष. २ तथा यथा. ३ खलु महानुभावा महनीयाः. ४ अवधारयन्समभिसृत्य; अवधार्योपसृत्य; अवधारयन्नुपसृत्य. ५ उपविश्य. ६ अपूर्विकाम्.

नेकदेशाटन्मानः किलाश्चर्यदर्शिनो भवन्तीति । न चाकस्मिकं दर्शनमपूर्वः परिचयः स्वल्पा प्रीतिरित्येकमप्याशङ्कनीयम् । अपूर्वदर्शनेऽपि न जात्या मणयः स्वां स्वच्छतामपह्नुवते । तदेहि । मुहूर्तमेकत्र गोष्ठीसुखमनुभवावः" इत्येनमवादीत् ॥ क ॥

असावपि "अपूर्वकौतुककथाकर्णनरसिक, श्रूयतां यद्येवम्" इत्यभिधाय सुखोपविष्टस्यास्य समीपे स्वयमुपविश्य कथयितुमारभत ॥ ख ॥

अस्ति स्वर्गसमः समस्तजगतां सेव्यत्वसंख्याग्रणी-
देशो दक्षिणदिङ्मुखस्य तिलकः स्त्रीपुंसरत्नाकरः ।
यस्मिंस्त्यागमहोत्सवव्यसनिभिर्धन्यैरशून्या जनै-
रुद्देशाः स्पृहणीयभावभरिताः कं नोत्सुकं कुर्वते ॥ ५४ ॥

कथं चासौ न प्रशस्यते ॥ ग ॥

यत्र त्रिपुरपुरंध्रिरोध्रतिलकहारिणा हरिविरिञ्चिचूडामणिमरीचिचक्रचकोरचुम्बितचरणनखचन्द्ररुचिनिचयेन भगवता सेव्यते सेव्यतयाऽपहसितकैलासश्रीः श्रीशैलः शूलपाणिना ॥ घ ॥

यत्र च विकचविविधवनविहारसुरभिसमीरणान्दोलितकदलीदलव्यजनवीज्यमाननिधुवनविनोदखेदविद्राणनिद्रालुद्रविडमिथुनसनाथपरिसराः सरसघननिचुलतलचलच्चकोरचक्रवाककुलकपिञ्जलमयूरहारीतहारिण्यो नाकलोककमनीयतां कलयन्ति क-

राजापीति ॥ किंवदन्तीं वार्ताम् ॥ जात्या मणयो विशिष्टजातीयरत्नानि ॥ क ॥ ख ॥
अस्तीति ॥ स्त्री च पुमांश्च स्त्रीपुंसौ । "अचतुर—" इत्यादिना निपात्यते ॥ ५४ ॥ ग ॥
यत्रेति ॥ त्रिशूलपाणिना त्रिपुरान्तकेन । तत्रस्थेन हि त्रिपुरासुरो हतः ॥ घ ॥

---

१ मुहूर्तमेकमेकत्र. २ अनुभवामः. ३ कथानकाकर्णन. ४ स्वयमप्युपविश्य. ५नासीम. ६विरिञ्चि. ७ सेव्यतया सेव्यते.

लमकेदारसाराः सरससहकारकारस्कराः कावेरीतीरभूमयः ॥ क ॥

किं बहुना।

अस्तु स्वस्ति समस्तरत्ननिधये श्रीदक्षिणस्यै दिशे
स्वर्गस्पर्धिसमृद्धये हृदयहृद्गोदावरीरोधसे।
यत्र त्रस्तकुरङ्गकार्भकदृशः संभोगलीलाभुवः
सौख्यस्यायतनं भवन्ति रसिकाः कंदर्पशास्त्रं स्त्रियः॥५५॥

तत्र प्रणतसुरासुरशिरःशोणमरीचिचयबहलकुङ्कुमानुलेपपल्लवितपादारविन्दद्वयस्य क्रौञ्चभिदो भगवतः सुगन्धिगन्धमादनाधिवासिनः स्कन्ददेवस्य दर्शनार्थमितो गतवानस्मि ॥ ख ॥

तस्माच्च निवर्तमानेन क्वचिदेकस्मिन्नध्वरोधिनि न्यग्रोधपादपतले दीर्घाध्वश्रान्तेन विश्राम्यता मया श्रूयतां यदाश्चर्यमालोकितम् ॥ ग ॥

अतिललितपदविन्याससारसाधुसिन्धुरवधूस्कन्धमधिरूढा, प्रौढसखीसहायप्राया, प्रान्तपतच्चारुचामरमरुन्नर्तितालकवल्लरी, कर्णकुवलयालंकारधारिणी, रुचिररुचिमच्चरणनूपुरा, पुरःसरसरागगान्धर्विककण्ठकन्दरविनिःसरत्सरसगीतप्रेङ्खोलनप्रयोगेषु दत्तावधाना, नेत्रे मनाङ्मीलयन्ती, ध्रियमाणमायूरातपत्रमण्डला, मण्डलितमदनचापचक्रवक्रभ्रूः, भूपालपुत्रिका कापि कापि कुतोऽप्युच्चलिता तदेव न्यग्रोधच्छायामण्डपमशिश्रियत् ॥ घ ॥

तां चालोक्य चिन्तितवानस्मि विस्मितमनाः ॥ ङ ॥

"किं लक्ष्मीः स्वयमागता मुररिपोर्देवस्य वक्षःस्थला-
त्कोपात्पत्युरुतावतारमकरोद्देवी भवानी भुवि।

---

१ शिरस्तारशोणमणिमरीचिनिचयबहुल. २ सुगन्धगन्ध. ३ रोधिन्यग्रोध. ४ विश्रम्यता. ५ विन्याससाधु. ६ चारुचामीकरचामर. ७ चापवक्र. ८ न्यग्रोधपादपच्छाया; न्यग्रोधपादपतच्छाया.

श्यामाम्भोजसदृक्षपक्ष्मलचलन्नेत्रामिमां पश्यतो
धातस्तात करोषि किं न वदने चक्षुःसहस्रं मम ॥ ५६ ॥

अपिच ।

इन्दोः सौन्दर्यमास्यं कलयति कमलस्पर्धिनी नेत्रपत्रे
कालिन्द्याः कुन्तलाली तुलयति विभवं भव्यभङ्गैस्तरङ्गैः ।
तस्याः किं श्लाघ्यतेऽन्यत्सुभगगुणनिधेः काप्यपूर्वैव यस्याः
पुष्पेषोर्वैजयन्ती जयति युवजनोन्मादिनी यौवनश्रीः॥५७॥

अपिच ।

आकारः स मनोहरः स महिमा तद्वैभवं तद्वयः
सा कान्तिः स च विश्वविस्मयकरः सौभाग्यभाग्योदयः ।
एकैकस्य विशेषवर्णनविधौ तस्याः स एव क्षमो
यस्यास्मिन्नुरगप्रभोरिव भवेज्जिह्वासहस्रद्वयम् ॥ ५८ ॥

सापि यथा त्वमिदानीं मामिह पृच्छसि तथार्धपथमिलितं कंचिदुदीचीनमध्वगं दक्षिणस्यां दिशि प्रस्थितमादरेण पृच्छन्ती मुहूर्तमिव तत्रैव विश्रमितुमारभत ॥ क ॥

श्रुतश्चायं मयापि तेन तस्याः पुरः कस्यचिदुदीच्यनरपतेः श्लाघ्यमानस्य कैथावशेषालापः ॥ ख ॥

तस्मिन्स्मितमुखे यूनि यूपदीर्घभुजद्वये ।
ते धन्या न्यपतन्येषां कंदर्पसदृशे दृशः ॥ ५९ ॥

आकार इति ॥ उरगप्रभोर्वासुकेर्यथा जिह्वासहस्रद्वयं वर्तते तथा यस्यैतावत्यो जिह्वा भवेयुः स एव वर्णयितुं क्षमो भवेत् ॥ यदा "जिह्वासहस्रं मुखे" इति पाठः । तदा सहस्रशब्दोऽनन्तबहुत्ववचनः ॥ ५८ ॥ क ॥

---

१ यस्य स्यादुरगप्रभोरिव मुखे जिह्वासहस्रद्वयम्; यस्यास्मिन्नुरगप्रभोरिव भवेज्जिह्वासहस्रं मुखे. २ उदीचीनं नरपतेः. ३ कथाशेषालापः. ४ भुजद्वया.

किं बहुना ।

सा त्वं मन्मथमञ्जरी स च युवा भूभृत्तवैवोचितः
श्लाघ्यं तद्भवतोः किमन्यदपरं किं त्वेतदाशास्महे ।
भाग्यैर्योग्यसमागमेन युवयोर्मानुष्यमाणिक्ययोः
श्रेयानस्तु विधेर्विचित्ररचनासंकल्पशिल्पश्रमः ॥ ६० ॥

तन्न जाने स कः सुकृती तेन तस्याः श्रवणादेवोल्लसद्बहुलपुलकाङ्कुरोत्तम्भितांशुकायाः पुरो विस्तरेणैवं वर्णितः ॥ क ॥

न च मयापि विस्मयविस्मृतविवेकेन केयं कस्येयं कुत्र कुतो वा प्रस्थितेति प्रश्नाग्रहः कृतः । केवलमदृष्टपूर्वरूपोत्पन्नाकस्मिककौतुकातिरेकास्तमितसमस्तान्यव्यापारेणैकाग्रतया ग्रहनिरुद्धेनेवान्धेनेव मूकेनेव मूढेनेव मूर्छितेनेव संजातसंतमसेनेव विषविघूर्णितेनेव स्तोभस्तम्भितेनेव गतायामपि तस्यां तेनाध्वनीनेन सह तत्रैव न्यग्रोधतरुतले सुचिरमासितमासीत् ॥ ख ॥

तदायुष्मन्नेष कथितः स्ववृत्तान्तः ॥ ग ॥

तस्यां दिशि तया सकलजगज्ज्योत्स्नया, अस्मिन्नपि देशे निःशेषजननयनकुमुदेन्दुना त्वया दृष्टेन, दृष्टं यद्द्रष्टव्यम् । अभूच्च मे श्लाघ्यं जन्म । जाते कृतार्थे चक्षुषी । संपन्नः सफलः परिभ्रमणप्रयासः ॥ घ ॥

तदिदानीं किमन्यत् ॥ ङ ॥

**सा त्वमिति** ॥ अत्राप्रत्यक्षमपि बुद्धिकल्पितं नलं प्रत्यक्षमिव मन्यमानो भवतोरित्याह । भवती च भवांश्च भवन्तौ । "पुमान्स्त्रिया" इत्येकशेषः ॥ मानुषत्वे भूषणभूतत्वात्तयोर्माणिक्यत्वम् ॥ ६० ॥

**नेति** ॥ स्तोभश्चेष्टाविघातः ॥ ख ॥

---

१ क्रमः. २ पुरतः. ३ केयमिति क्वचित्पुस्तके नास्ति. ४ मूकेनेवेति क्वचित्पुस्तके नास्ति. ५ संजातान्धतमसेनेव. ६ विषघूर्णितेन. ७ मोहसंस्तम्भितेनेव. ८ त्वया चाद्य.

अनुमन्यस्व स्वविषयगमनाय माम्" इत्यभिधाय व्यरंसीत् ॥क॥

राजाप्येतदाकर्ण्य चिन्तितवान् ॥ ख ॥

श्रीमाणिक्यमहाकरः स विषयः पान्थोऽप्ययं तथ्यवा-
ग्व्यापारोऽपि विधेर्विचित्ररचनस्तत्किं न संभाव्यते ।
किं त्वाश्चर्यमदृष्टरूपविभवाप्याकर्ण्यमाना सती
कान्तेत्युन्नतचेतसोऽपि कुरुते नाम्नैव निम्नं मनः ॥६१॥

तथाहि ।

नो नेत्राञ्जलिना निपीतमसकृत्तस्याः स्वरूपामृतं
नो नामान्वयपल्लवोऽपि च मया कर्णावतंसीकृतः ।
चित्रं चुम्बति चुम्बकाश्मकमयो यद्वद्बलाद्दूरत-
स्तद्वत्तर्जितधैर्यमेतदपि मे तस्यां मनो धावति ॥ ६२ ॥

सोऽयं दुर्लभेष्वनुरागः पुंसाम्, अज्वरमस्वास्थ्यम्, अदौर्गत्यं दौःस्थ्यम्, अविषास्वादनमाघूर्णनम्, असाध्वसं कम्पनम्, अनाश्मविक्रयं पारवश्यम्, अजरं जाड्यम्, अनिन्धनं ज्वलनम्, अलग्रग्रहमुन्मादनम्, अवात्याघातमुद्भ्रमणम्, अमौनं मौक्यम्, अहीनश्रुति बाधिर्यम्, अनष्टदृष्टिकमन्धत्वम्, अस्खलितमनोरथं मनःस्तम्भनम्, अमन्त्र आवेशः ॥ ग ॥

सर्वथा नमः सुस्थितजनदुर्जनाय मनोजन्मने, यस्यायमेवंविधो व्यापार इत्यवधारयन्नवतार्य सर्वाङ्गेभ्यो भूषणानि तस्मै सदयमदात् ॥ घ ॥

श्रीति ॥ निम्नमभिलाषदीनत्वाल्लाघवास्पदम् ॥ ६१ ॥

नो नेत्रेति ॥ यद्वद्यथा चुम्बकसंज्ञमश्मकम् । पाषाणं कर्म ॥ अयो लोहं कर्तृ ॥ चुम्बति । तथा मेऽपि मनस्तस्यां धावति ॥ ६२ ॥

सोऽयमिति ॥ आवेशो व्यन्तरादेर्मनसि प्रवेशः ॥ ग ॥

---

१ पाथः. २ अलग्नं ग्रहम्.

तैस्तैरालापैः स्थित्वा च कंचित्समयमिमं [illegible] यथाप्रस्थितं पान्थं कथमपि प्रेषयामास ॥ क ॥

स्वयमपि तत्कालान्तरालमिलितैर्नक्षत्रैरिव सार्द्रमृगशिरोहस्तैः सश्रवणचित्रकृत्तिकोपस्करवाहिभिः पापर्द्धिकपरिजनैरनुगम्यमानो राजा निजावासमयासीत् ॥ ख ॥

ततः प्रभृति च

हृद्योद्यानमरुत्तरङ्गितसरित्तीरे तरूणामध-
स्तल्पेऽनल्पसरोजिनीनवदलप्रायेऽपि खिन्नात्मनः ।
धीरस्यापि मनाङ्मनस्तृणकुटीकोणान्तराले बला-
ल्लग्नोऽस्येति विभाव्यते परवशैरङ्गैरनङ्गानलः ॥ ६३ ॥

एवमस्य

पुनरपि तदभिज्ञान्पृच्छतः पान्थसार्था-
न्प्रतिपथमथ यूनो यान्ति तस्य क्रमेण ।

स्वयमपीति ॥ राजा निजहर्म्यमगात् ॥ तत्कालं तत्क्षणात् । अन्तरालेऽध्वमध्ये । राजा चन्द्रोऽपि तदा । तस्मिञ्ज्योतिःप्रसिद्धे काले कलासमूहे अष्टशतीलक्षणे यदन्तरालं तत्र ॥ मिलितैः परिजनैरनुगम्यमानः । कीदृशैः । सार्द्राणि सास्रत्वाच्च्योतन्ति हरिणशिरांसि येषु तथाविधा हस्ता येषां तैः । सश्रवणां सकर्णाम् । चित्रस्य चित्रकायस्य कृत्तिकां त्वचम् । उपस्करं मृगयोपयोगि वहन्ति तैः ॥ आर्द्रशब्दो भाववचनः । पक्षे सह आर्द्रया नक्षत्रेण, सार्धं मृगशिरो हस्तश्च नक्षत्रं येषु । श्रवणचित्रे नक्षत्रे । अनयोः समाहारद्वन्द्वः । तेन सह । ताश्च ताः कृत्तिकाश्च तासामुपस्करं समवायं वहन्ति ॥ ख ॥

हृद्येति ॥ हृदयस्य बन्धनं हृद्यम् ॥ ६२ ॥

तमसो यत्र विनाशः पथिकोच्छ्वासः पदार्थनिर्भासः ।
उदयं प्रतिपाद्यासौ भुवनमुदे जयति चण्डरुचिः ॥

१ स्थित्वा स च. २ इमं यथा. ३ संप्रेषयामास. ४ सरस्तीरे.

हरचरणसरोजद्वन्द्वमुद्राङ्कमौले-
र्मदनमदनिवासा वासराः प्रावृषेण्याः ॥ ६१ ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हर-
चरणसरोजाङ्कायां प्रथम उच्छ्वासः समाप्तः ॥

इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति चण्डपालविरचिते दमयन्तीकथाविवरणे प्रथम
उच्छ्वासः समाप्तः ॥

---

## अथ द्वितीय उच्छ्वासः ।

**अथ कदाचिद्विगलद्बहलपरिमलमिलदलिकुलाकुलितकुटजक-
दम्बकुसुमकर्णपूरशून्यकाननासु, विश्राम्यन्मदमुखरमयूररसनाव-
लीकलक्वणितासु, विरलतरतडिल्लताललितलावण्यासु, विगतहं-
सद्विजराजिषु, पतत्पयोधरासु, क्षीणशुक्रासु, वृद्धास्विव गतप्राया-**

**अथेति** ॥ अनन्तरमितीति सति स राजा निकटकानने विचरत्किंनरमिथुनेन गीयमानं रागविशेषेणोच्चार्यमाणमिदमिति वक्ष्यमाणमनश्लीलमग्राम्यं श्लोकत्रितयमाकर्णितवान् । किं विशिष्टः । कलहंसा एव हासस्तेन रम्यायां तरुण्यामभिनवप्रवृत्तायाम् ॥ अथ च शरदेव तरुणी युवतिः । तस्यामागतायां रागात्स्वयं प्राप्तायाम् । उत्सुक उत्क इत्युक्तयनन्तरम् ॥ तदा मदेन क्षीबतया तरुणिमोद्रेकेण वा कलकलो यस्याः ॥ तथा शुभ्रत्वाद्धंसोपमौ हासहारौ स्तोऽस्यामिति कर्मधारयान्मत्वर्थीयः । न कर्मधारयादिति तु प्रायिकम् ॥ किं विदधानः कुर्वाणः । काम् । रतिं चित्तासक्तिम् । कासु । वर्षासु । किंभूतासु । गतप्रायासु स्वल्पशेषासु । तथा कुसुमान्येव कर्णपूरा उत्तंसास्तैः शून्यानि काननानि वनानि यासु । तथा मदेन मुखराणां मयूराणां या र-

---

१ समविषमकविश्रीत्रिविक्रम; श्रीभट्टत्रिविक्रम. २ हरचणसरोजाङ्कः. ३ प्रथमोच्छ्वासः. ४ विगलत्. ५ बहुल.

सु वर्षासु, रतिमकुर्वाणो मदकलकलहंसहासहारिण्यामुत्सुकस्तरुण्यामिवागतायां शरदि, द्विरदमदगन्धसंबन्धानुधाविते कुसुमितसप्तच्छदच्छायासु विस्फूर्जति रोषोत्कुषितकेसरकरालकण्ठे कण्ठीरवकदम्बके, गृहदीर्घिकामृणालिकाकाण्डखण्डनविरामरमणीयमुन्नदत्सु शरत्समयप्रवेशमङ्गलमृदङ्गेष्विव हंसमण्डलेषु, स्मरशरनिकरनिर्मथितपान्थसार्थप्रहाररुधिरनिष्यन्दबिन्दुसंदोह इव वनस्थलीषून्मिषति बन्धुरबन्धूककुसुमप्रकरे, प्रसरन्तीषु शरल्लक्ष्मीप्रवेशानन्दवन्दनमालासु निःशङ्कशुककुलावलीषु, श्रूयमाणासु स्मरराजराज्यविजयघोषणासु पक्ककलमगन्धशालिपालिकाबालिकाहर्षगीतिषु, शरच्छ्रीकटाक्षेषून्मीलत्सु नीलनीरजेषु, क्वणति वर्षावधूप्रस्थानपटहे षट्चरणचक्रवाले, प्रभात इव घनतिमिरविरामरमणीयेजाते जलनिधिशयनशायिशार्ङ्गिनिद्राद्रुहि विनिद्रसान्द्ररससरोजराजिराजितसरसि शरत्समये, स महीपतिः समासन्नवनविहारिकिंनरमिथुनेन गीयमानमिदमनश्लीलं श्लोकत्रयमशृणोत् ॥ क ॥

सनावली जिह्वाश्रेणिस्तस्याः कलक्वणितम् । तद्विभ्राम्यद्भिरमध्यासु । वर्षोदये हि केकायन्ते न प्रान्ते । मदाभावात् । तथा स्तोकविद्युदुद्द्योतासु । व्यपेतहंसपक्षिपङ्क्तिषु । भ्रश्यद्घनासु । क्षीणशुक्राख्यप्रहासु ॥ कास्विव । वृद्धास्विव ॥ तदा । रतिः संभोगः । गतं प्रकृष्टमयमिष्टफलं दैवं यासाम् । तथा कुसुमैः पुष्पदामभिः कर्णपूरैश्च शून्यं कं शिर आननं च यासाम् । तथा रसनायाः काञ्च्याः क्वणितस्य मुखरमयूररवो ललितस्य मधुराङ्गविन्यासस्य लावण्यस्य च लोचनलेह्यकमनीयगुणस्य विरलतडिदुपमानम् । तथा व्यपेतहंसशुभ्रदन्तराजिषु पतत्कुचासु । तथा क्षीणं गर्भसंभवाभावाद्विनष्टं शुक्रं पुंवीर्यं यासु । न पुनर्निवृत्तवीर्यास्विति व्याख्येयम् । पुंसां वीर्यं स्त्रीणां रज इति

१ उत्सुकश्च. २ द्विरदमदगन्धसंधानधाविते; द्विरदमदगन्धानुसंधानवासितासु. ३ वासितकुसुमित ४ विस्फूर्जिते. ५ कुटुम्बके. ६ मृदङ्गेषु हंस. ७ पथिकप्रहार; पान्थप्रहार. ८ शारत्स्त्री; सरःश्री. ९ नीलसरोजेषु. १० विहारहारि.

धन्याः शरदि सेवन्ते प्रोल्लसच्चित्रशालिकान् ॥
प्रासादान्स्त्रीसखाः पौराः केदारांश्च कृषीवलाः ॥ १ ॥
नमिताः फलभारेण न मिताः शालिमञ्जरीः ॥
केदारेषु हि पश्यन्तः के दारेषु विनिःस्पृहाः ॥ २ ॥
प्रावृषं शरदं चापि बहुधाकाशहारिणीम् ॥
विलोक्य नोत्सुकः कः स्यान्नरो नीरजसंगताम् ॥ ३ ॥

प्रसिद्धेः। अतएव न विद्यते बलं वीर्यं यासामित्यबलाः ॥ रसनाशब्दः काञ्चीपक्षे न परं तालव्यः। दन्त्योऽप्यस्ति। तथा च विश्वप्रकाशः—"रसना काञ्चिजिह्वयोः" इति॥ द्विरदमदगन्धस्य संबन्धो द्विरदमदगन्धोऽयमिति प्रत्यभिज्ञा तयानुधाविते। संधानपाठे-तु संधानं संधिर्मैत्री सादृश्यमिति यावत्। शरदि सप्तच्छदाः पुष्प्यन्ति। ते च मदग-न्धयस्ततो गजभ्रान्त्या सरोषं विस्फूर्जति सिंहवृन्दे। मृणालिकाकाण्डस्य खण्डनाय योऽसौ विरामोऽर्थाभावस्तस्यैव। तेन रम्यं यथा भवति स्थित्वा स्थित्वा मृणालं चर्वन्ति तत्कषायसंशुद्धकण्ठाश्च नादं कुर्वन्तीत्यर्थः। हंसमण्डलानि शरत्प्रवेशमङ्गलमृदङ्गाः॥ बन्धूककुसुमस्यातिलौहित्याद्विरहिजनरुधिरत्वम् ॥ शुकावलिस्तोरणम् ॥ कलमस्य श्वेतशालेः, गन्धशालेश्च रक्षिका गीतयः कंदर्पराजजयघोषणाः॥ विकसन्नीलोत्पला-नि शरल्लक्ष्मीकटाक्षाः॥ भृङ्गगणश्च यान्त्या वर्षावध्वाः प्रयाणपणवः॥ घनो मेघो घ-नं च सान्द्रम्। शयनस्थानम्। निद्राद्रोहो विनिद्रसान्द्रसरोजराजितसरस्त्वं च शरत्प्र-भातयोः समानम् ॥ क ॥

**धन्या इति** ॥ प्रोल्लसन्त्यश्चित्रशालिका आलेख्यभूमिका येषु। पक्षे चित्रा बहु-विधाः शालयः॥ स्त्रीसखा इत्युभयत्र योज्यम् ॥ १ ॥

कुतः स्त्रीसखा इत्याह—**नमिता इति** ॥ हि यस्मात्कारणात्। दारेषु के निः-स्पृहाः स्युः। किं कुर्वन्तः। फलभारेण नमिता वक्रिता न मिताः स्तोकाः केदारेषु क्षे-त्रेषु शालिमञ्जरीः पश्यन्तः। तद्दर्शनं ह्युद्दीपनविभावः॥ २ ॥

**प्रावृषमिति** ॥ रमणीयत्वात्। बहुधा पुनः पुनर्विलोक्य प्रावृषमाकाशस्य व्यो-म्नस्तिरोधायिनीं नीरजसं निःपांशुं गतामतिक्रान्तां शरदं च काशपुष्परम्याम्। तथा नीरजैः पद्मैः संगतामन्विताम् ॥ ३ ॥

---

१ शालमञ्जरीः. २ केदारेष्विह. ३ वापि.

अनेन मृदुमूर्छनातरङ्गरङ्गिताक्षरेण श्रवणपथप्रथमप्रियातिथिना श्लोकत्रयेण विषविषमविषयवैरस्यव्रतव्रततिकठिनकुठारेण, दारपरिग्रहपराङ्मुखोऽपि शृङ्गारशृङ्गिशृङ्गमुत्तुङ्गमारोप्यमाणस्तदेवोद्यानममन्दमन्दारमकरन्दामोदमत्तमधुकरमधुरझंकाररमणीयमुपसर्तुमारभत ॥ क ॥

प्रथमसंमुखप्रेङ्खितेन चलच्चन्दनामोदनन्दिनान्दोलनवेगवित्रस्तकुसुमिततरुशिखरसुप्तसुरतश्रमखिन्नकिंनरीनिबिडतरपरिरभ्यमाण किंनरनमस्कृतेन क्रीडाकमलदीर्घिकातरङ्गोत्सङ्गरङ्गत्तरुणतामरसरसबिसरोद्गारहारिणा यौवनमदनिरुद्धनैषधीधम्मिल्लवल्लरीचलनविलासलासकेन वनमारुतेनोत्पुलकिततनुः स्तोकमन्तरमतिक्रम्य "देव, भवद्वैरिवधूवदने वने च नारङ्गतरूपशोभे भान्ति गण्डशैलस्थलालंकारधारिण्यो लोध्रलताः, नागरुचिताश्चन्दनपत्त्रभङ्गाः, नालिकेरचितस्तिलकः, नवा दृष्टिपथमवतरति घनाञ्जनयष्टिका, नाभिरम्या नीलतमालका, नाधरीकृतस्ताम्बूलीरागः, पल्लवितमेत-

अनेन श्लोकत्रयेण प्रियाग्रहविमुखोऽप्युच्चैः शृङ्गारगिरिशिखरं नीयमानस्तदेव वनं गन्तुमारेभे ॥ क ॥

तत ईदृग्विधेन वायुना रोमाञ्चिततनुः देवेत्याद्यामन्त्र्य तवारिस्त्रीमुखे वने चेदमिति भङ्गश्लेषोक्तिदक्षया वनरक्षिकया कथ्यमानानि वनकौतुकस्थानानि नलो व्यलोकयत् ॥ आन्दोलनवेगेत्यादावान्दोलनं तरोरेव पवनकृतम् ॥ त्वदरिस्त्रीमुखे अरमत्यर्थं गतसौन्दर्ये कपोलफलकालंकारिण्यो लोध्रस्य विलेपनरूपस्य लता मण्डनवल्ल्यो न भान्ति । अगरुद्रवेण चिताश्चन्दनद्रव्यस्य पत्त्रभङ्गाः पत्त्रवल्ल्यः ॥ अलिकं ललाटं तिलकं पुण्ड्रम् ॥ वा समुच्चये घनं सान्द्रमञ्जनं तस्य यष्टिः शलाका ॥ अभिरम्या संस्कृता । प्रकर्षेण नीलाः कुटिलकेशाः अधरोऽस्यास्तीत्यधरी ओष्ठवान् । ताम्बूलराग ओष्ठसंबद्धः कृत इति भावः ॥ सर्वत्र नञ्संबन्धः ॥ अवतरतीति तु संनिहितमेव योज्यं

१ विषमविषय. २ समारोप्यमाणः. ३ अमन्दान्दोलत. ४ सुखसुप्त. ५ किंनरीजन. ६ यौवनमदानिरुद्धापाङ्गनैषधी; यौवनमदरुद्धापाङ्गनैषधीय. ७ हास्यलासकेन. ८अतिक्रम्य वनपालिका राजानं जगाद. ९ ताम्बूल.

दृश्यतेऽशोकजालम्। इतश्च काञ्चनगिरिरिव सुरचितः क्रीडापर्वतः। इतश्च गूर्जरकूर्चमिवाखण्डितप्रवालं बालशालवनम्। इतश्च भवद्वैरिनगरमिवानेकविधवकुलसंकुलं कूपकुलम्। इतश्च धूर्जटिजटाजूट इव पुंनागवेष्टितो वापीपरिसरः। इतश्च कुरुसेनेव कृताश्वत्थामहिता च क्रीडासरित्पुलिनपालिः।" इति भङ्गश्लेषोक्तिकुशलया वनपालिकया निवेद्यमानानि वनविनोदस्थानान्यवलोकयांचकार॥ क॥

चलच्चकोरचक्रवाकचक्रचञ्चुचञ्चलचञ्चरीकचरणचूर्णितचम्पकाङ्कुरमरिचमञ्जरीदलदन्तुरेण वनमार्गेण स्तोकमन्तरमतिक्रान्तस्तया पुनरेवं बभाषे॥ ख॥

"देव, पुरंदरानन्दिनन्दनोद्यानस्पर्धिनोऽस्य वनस्य किं किं वर्ण्यते॥ ग॥

न प्रत्येकम्। पल्लवितशब्दो लक्षणया प्रवृद्धार्थः। शोकात्सप्रलापमनोदौःस्थ्याज्जातं शोकजम्। अलमनर्थः॥ वने च नारङ्गतरुभिः कृतशोभे सहजच्युतस्थूलपाषाणस्थलीभूषणा लोध्रस्य तरुविशेषस्य लताः शाखा भान्ति॥ नागेभ्यो रुचिताश्चन्दनतरोः पत्राणां भङ्गा विशेषाः॥ तिलको वृक्षो नालिकेरैस्तरुभिर्व्याप्तः॥ नवा नवीना। अञ्जनस्य शाखिनो यष्टिः प्रकाण्डः॥ तमालका इति ह्रस्वे कः। अतएव नाभिरम्या नाभिदघ्ना इति भावः॥ नाधरीकृतो न हीनीकृतः। ताम्बूली वल्ली। रागः सक्तिः॥ किसलयितमशोकानां जालं खण्डः॥ इतश्च सुष्ठु रचितः सुरैश्रितो व्याप्तश्च॥ प्रवालाः पल्लवाः। पक्षे अखण्डिताः अतएव प्रवृद्धा वालाः केशा यत्र॥ अनेकविधैर्बकुलैः संकुलम्। पक्षे अनेका विधवा मृतभर्तृका येषु कुलेषु तैः कुलैर्गोत्रैः संकुलम्॥ पुंनागमगः अन्यत्र पुमान्नागो वासुकिः॥ कृता उत्पादिता अश्वत्थाः पिप्पला यस्याम्। तथा महिता चार्वी। पक्षे कृतमश्वत्थाम्ने द्रोणसुताय हितं यया॥ क॥

चलदिति॥ संचारयोग्येन मार्गेण कियदपि व्यवधानमतिक्रान्तः पुनरपि तयैव बभाषे॥ ख॥

देवेति॥ देव, नन्दनस्पर्धिनोऽस्य किं वर्ण्यते॥ ग॥

---

१ गुर्जर. २ क्वचित्पुस्तके चक्रवाकचक्रेति नास्ति. ३ स पुनरेवम्; पुनरेषः. ४ किं वर्ण्यते.

**यत्र। त्रिजटाश्रयमनेकजटाः, स्फुरदेकपुष्पकमनेकपुष्पाः, समुद्वेजितराममानन्दितरामाः, समुपहसन्ति लङ्केश्वरं तरवः ॥ क ॥**

**[1] यस्मिंश्च मत्तमयूरहारिणि भद्रभुजंगप्रयाते विचित्रक्रौञ्चपदे छन्दःशास्त्र इव वैतालीयं मालिनी शिखरिणी पुष्पिताग्रा च दृश्यते विविधा जातिः ॥ ख ॥**

**यस्मिंश्च। एकभीमार्जुनविनिर्जितानाक्रान्तानेकभीमार्जुनाः, कोपितैकनकुलानाह्लादितानेकनकुलाः, सहदेवेनैकेन स्पर्धमानानन्नैकैः सहदेवैः संगताः [2] न बहु मन्यन्ते कुरुवीरान्वीरुधः ॥ ग ॥**

**किं चान्यदवलोकयतु देवः।**

**पटलमलिकुलानामुन्नमन्मेघनीलं**
**भ्रमदुपरि तरूणां पुष्पितानां विलोक्य।**
**मृदुमदकलकेकानिर्भरो नृत्यसक्त-**
**स्तरलयति कलापं मन्दमन्दं मयूरः ॥ ४ ॥**

**यत्रेति** ॥ रावणं तरवो हसन्ति ॥ त्रिजटा रावणस्वसा। जटा मूलानि ॥ पुष्पकं विमानं कुसुमं च ॥ रामो दाशरथिः। रामाः स्त्रियः ॥ अनेकजटा इत्येकशब्देन संख्योपलक्ष्यते। ततोऽनेकशब्दोऽसंख्यातवचनः ॥ क ॥

**यस्मिंश्चेति** ॥ वै स्फुटमियं ताली तालद्रुमः। इयं जातिर्मालती दृश्यते ॥ द्वे अपि कीदृश्यौ। माला अस्यामस्ति। तथा शिखरयुक्ता कुसुमिताग्रभागा च। किंविशिष्टे वने। मत्तैर्मयूरै रम्ये। तथा भद्रं मनोज्ञं भुजंगानामहीनां विटानां च प्रयातं यत्र। क्रौञ्चः पक्षी ॥ पक्षे मत्तमयूरं भुजंगप्रयातं क्रौञ्चपदा वैतालीयं मालिनी शिखरिणी पुष्पिताग्रा च छन्दोनामानि ॥ जातिश्च उक्तादिरुत्कृत्यन्ता ॥ ख ॥

**यस्मिंश्चेति** ॥ वने वीरुधो लताः कुरुवीरांश्च गौरवयन्ति ॥ आक्रान्ता अनेके बहवो भीमा अम्लवेतसा अर्जुनाश्च याभिः ॥ यद्विश्वप्रकाशः—"भीमोऽम्लवेतसे शंभौ घोरे वापि वृकोदरे" ॥ नकुला जीवाः। सहदेवास्तरवः ॥ कुरुवीरपक्षे भीमार्जुननकुलसहदेवाः पाण्डवाः ॥ ग ॥

---

1 मध्यमणिविभूषिते, चम्पकमालाचित्रे, हरिगीताकर्णनसुखे, शार्दूलविक्रीडिते, हरिणीमनोहरे, सहरिणप्लुते छन्दःशास्त्रे. 2 शालिनी.

अपि च।

भ्राम्यद्द्विरेफाणि विकासभाञ्जि
संयोज्य पुष्पाणि शिलीमुखेषु।
इह स्थितः सर्वजगज्जयाय
धनुःश्रमं पुष्पशरः करोति ॥ ५ ॥

इतश्च

हरिति हरिणयूथं यूथिकाजालमूले
कुसुमजमधुबिन्दुस्यन्दसंदोहभाजि।
मधुरमधुकरालीगीतदत्तावधानं
लिखितमिव न दूर्वापल्लवानुल्लुनाति ॥ ६ ॥

इतोऽपि

सोऽयं क्रीडाचलो भव्य लोभव्यसनवर्जित[1]।
यस्मिन्नासन्नसारङ्गा सारं गायति किंनरी ॥ ७ ॥
राजते राजतेनायं सानुना सानुनायकः।
यस्मिन्निशम्य गायन्तं किंनरं किं न रंस्यते ॥ ८ ॥

भ्राम्येति ॥ शिलीमुखाः शराः। इहेत्युद्यानस्योद्दीपनविभावातिशयोक्त्या कामस्य स्थितिरुच्यते। एतावता सुरभिकुसुमसंपदुक्ता ॥ ५ ॥

हरितीति ॥ हरिति शाद्वले यूथिकासमूहस्याधःप्रदेशे मधुबिन्दुसंदोहसंबन्धात्स्पृहणीयेऽपि गीतिरसिकतया मृगाणां दूर्वाङ्कुराग्रहणमुक्तम् ॥ ६ ॥

सोऽयमिति ॥ हे भव्य, हे लोभेन व्यसनैश्च विवर्जित, सोऽयं क्रीडागिरिः ॥ यस्मिन्गिरावासन्नमृगा किंनरी सारमुत्कृष्टं गायति। गीतप्रकर्षाकृष्टत्वात्सारङ्गाणामासन्नता ॥ ७ ॥

राजत इति ॥ अयं सानुनायको गिरी रजतनिर्मितेन सानुना तटेन राजते ॥ यस्मिन्गायन्तं किंनरं निशम्य श्रुत्वा न किं रंस्यते। रंस्यत एव ॥ ८ ॥

---

1 वर्जितः

इतश्चास्य

जनयति जलबुद्धिं बाललीलामृगाणा-
मयमिह पटुकान्तिः स्फाटिको भित्तिभागः।
इह हरितमणीनामुल्लसन्तो मयूखाः
सरसनवतृणालीलोभमुत्पादयन्ति ॥ ९ ॥

इयं च

गौरवं गौरवंशस्य पर्वतः पर्वतस्थले।
भ्रमरी भ्रमरीणस्य कुरुतेऽकुरुतेन ते ॥ १० ॥

अपिच।

इह कवलितकन्दं कंदरे कन्दलिन्यां
भुवि विरचितकेलि क्रीडति क्रोडयूथम्।
इह सरसिजगर्भभ्रान्तभृङ्गं कुरङ्गाः
सरसि सरलयन्तः कंधरां[1] कं धयन्ति ॥ ११ ॥
इह पुनरनिशं निशम्य भिन्न-
द्रुमसुकुलानि कुलानि षट्पदानाम्।
श्रुतिसुखकरणं रणन्ति वीणां
तदनुगुणां गुणयन्ति[2] किंनरेन्द्राः ॥ १२ ॥

गौरेति॥ गौरो वंशोऽन्वयो यस्य तस्य ते। पर्वतस्थले गिरिस्थले। पर्वतो गच्छतः। अतएव भ्रमेण देहवैक्लव्येन भ्रमिसंज्ञेन खिन्नस्य सतोऽकुत्सितरुतेन भ्रमरी भृङ्गी गौरवं प्रतिपत्तिविशेषं कुरुते ॥ १० ॥

इहेति ॥ कं जलम्। धयन्ति पिबन्ति ॥ ११ ॥

इहेति ॥ रणन्तीति शत्रन्तं षट्पदकुले विशेषणम् ॥ तस्य भृङ्गरणितस्यानुगुणामनुगामिनीम् ॥ १२ ॥

---

१ कंधराः. २ क्वणयन्ति; गणयन्ति.

इतश्च क्रीडाचलस्यच्छकमलदीर्घिकातीरतरुतलमहुसरतु देवः ॥ क ॥

यत्र च

वहति नवविकासोल्लासिकिंजल्कलुभ्य-
न्मधुकरकृतगीता नर्तयन्नब्जराजीः ।
वनकरिमदगन्धस्पर्धिसप्तच्छदाली-
कुसुमजकणशारः शारदीनः समीरः" ॥ १२ ॥

राजा तु तेन तस्याः सकलल[1]लितवनप्रदेशप्रकटनप्रियालापप्रपञ्चेन परितोषितः "साधु भोः सारसिके सुभाषितमञ्जरि, साधु । गृहाण पारितोषिकम्" इत्यभिधाय सर्वाङ्गीणाभरणप्र[2]दानेन प्रसन्नाननां तामकरोत् ॥ ख ॥

त[3]तश्च संचरच्चटुलभृङ्गविहंगवेगवे[4]ल्लद्बकुलचम्पकचूतचन्दनमन्दारामन्दस्यन्दमानमकरन्दबिन्दुसंदोहाडम्बरिताकाण्डप्रावृषि, प्रलम्बताम्बूलवल्लीवलयितनितम्बनिम्बकि[5]म्बजम्बीरजम्बूस्तम्बकदम्बके, कुसुमितकरवीरवीरुधि कोरकितकरञ्जाञ्जननिकुञ्जशिञ्जानशुककपिञ्जले, जलदसमयनीरदनीलतमतमालतलताण्डवितशिखण्डिनि, मण्डलितमदकल[6]कलहंसोत्तंसकमलवापीमण्डिते, मञ्जरितासिन्दुवारसुन्दरामोदनन्दिनि मन्दतरमारुता[7]न्दोलनविलोलकर्[8]क्कोलकुटलफलनालिकेरलवङ्गपूगपुंनागनारङ्गरङ्गितविहङ्गे भृङ्ग-

वहतीति ॥ कुसुमजकणा मकरन्दलवास्तैः शारः शबलः । शरदि भवानि मुद्रादीनि विद्यन्ते येषां ते शारदिनः कृषीवलास्तेषामिनः स्वामी । तत्तत्सस्यसंपत्तिहेतुत्वात् ॥ १२ ॥

ततश्चेति ॥ भृङ्गमुखनखरेत्यादौ भृङ्गो धूम्याटः पक्षी ॥ क ॥

1 ललितपल्लवित. 2 मदानप्रसन्नाननाम्. 3 अनन्तरं चेतस्ततश्च संचरत्; इतस्ततश्च संचरत्. 4 वेल्लत्कुचलसद्बकुल. 5 निम्बजम्बीर. 6 कलहंसमण्डलोत्तंस. 7 आन्दोलित. 8 कक्कोलपनसकुट्टलफल; पनसकुसुमकुट्टलफल; कङ्कोलकटफल.

मुखनखरपंजरजर्जरितसर्जखर्जूरमञ्जरीरजःपुञ्जपांसुलभुवि, भुवो भूषणायमाने, सर्वर्तुनिवासनामनि वने विहर्तुमारभत ॥ क ॥

तत्र च व्यतिकरे प्रलयप्रचण्डपवनोल्लासिततनुतुहिनाचलगण्डशैललीलामाकलयन्तः, मन्दमरुत्तरङ्गिततनुतरशरदभ्रविभ्रमायमाणाः, सुरवारणेन्द्रविक्षोभितगगनमन्दाकिनीपतत्पाण्डुरडिण्डीरपिण्डपटलानि विडम्बयन्तः,शकलोदितेन्दुमण्डलसहस्रसंछादितमिव गगनमापादयन्तो, मन्दरगिरिपरिक्षेपक्षुभितक्षीरवारिधिदूरसमुच्छलितदुग्धकल्लोललीलां दर्शयन्तः, शेषाहिफणचक्रवालधवलाः, प्रमुदितहराट्टहासलवा इव मूर्तिमन्तः पतन्तः, अमन्दमन्द्रकोलाहलभरितभुवनान्तरालाः, सपदि धरातलमुत्फुल्लपाण्डुपङ्कजप्रकरप्रकारेण मण्डयन्तो निपेतुः कुतोऽपि पुण्डरीकपाण्डुपक्षपञ्जराजयो राजहंसाः ॥ ख ॥

तथाविधे च व्यतिकरे विस्मयविस्मृतनिमेषतया निर्वातनिश्चलनीलोत्पलपलाशशोभायमानलोचनः कौतुकाकूततरलितमनाः सपरिजनो नरपतिरवलोकयन्निश्चल एवावतस्थे ॥ ग ॥

ते च धार्तराष्ट्रा अपि कृतपाण्डुपक्षपाताः, द्विजातयोऽपि सुराजिताः,केचिदुच्चचञ्चुपुटविघटितनिकटबालस्थलकमलकुड्मलाः संरसबिसकिसलयानि कवलयन्तः, केऽप्युन्नतसरलगलनालयो न-

तत्रचेति शकलोदितेति ॥ शकलः खण्डशशी हंससदृशो भवति ॥ मन्दरगिरिरेव परिक्षेपो मन्थाः ॥ ख ॥

तथेति ॥ शोभायमानलोचनेत्यत्र शोभाशब्दात्तद्वति वर्तमानादुपमानात्कर्तृवाचकादाचारेऽर्थे क्यङ् । एवं विभ्रमायमाणेत्यादयोऽपि व्याख्याताः ॥ ग ॥

ते चेति ॥ कृष्णैश्चरणाननैर्हंसा धार्तराष्ट्राः । कृतः पाण्डुपक्षाणां शुभ्रपक्षतीनां

---

१ पुञ्ज. २ नाम्नि. ३ तत्र व्यतिकरे. ४ मलयकालकरालप्रचण्ड. ५ पाण्डुडिण्डीर. ६ अमन्दमन्दर. ७ अमन्दमदकलकोलाहल. ८ एवावतिष्ठते स्म. ९ बालशैवालस्थल. १० सरल. ११ उन्नमित.

लिनवनविमुखाः खमालोकयन्तः, केचिदुत्क्षिप्तपक्षविक्षेपपवनकम्पितकन्दलाः सलीलमुत्पतन्तः, केचिन्मदमधुरनिजनिनादनिर्जितशिञ्जाननूपुराः, पुरःपुरोऽस्य धावन्तो विचरितुमारभन्त ॥ क ॥

राजापि परिधावितविहङ्गग्रहणाग्रहसंभ्रमव्यग्रपरिग्रहः परिहासोन्मीलदमलदन्तकान्तिस्तबकिताधरपल्लवो विहसन्नेव तेषामन्यतममनुसृचटुलचरणचारीचर्यया चारु संचरन्तमीषदुत्क्षिप्तपक्षविलासविहसितविलासिनीलास्यलीलमुन्नमिताग्रग्रीवं जग्राह हेलया हंसम् ॥ ख ॥

उत्क्षिप्तः स च तेन रक्तकमलगर्भविभ्रमायमाणपाणिपल्लवे, पाण्डुपद्म इव पद्मरागशुक्तितले, क्षणमुदयशैलशोणमाणिक्यशिखरशिखायामिन्दुरिव, विराजितो राजहंसो मृदुवाद्यमानरौप्यघनघर्घरीजर्जरस्वरेण कृतस्वस्तिशब्दो विस्पष्टवर्णविशेषं राजानमुपश्लोकयांचकार ॥ ग ॥

पाण्डुपङ्कजसंलीनमधुपालीसमं गलम्।
यो बिभर्ति विधेयात्ते ना कपाली स मङ्गलम् ॥ १४ ॥

पातो न्यासो यैः। तथा द्विजातयः पक्षिणः सुष्ठु राजिताश्च ॥ विरोधे धार्तराष्ट्राः कुरवः। पाण्डुर्नृपः। पक्षपातस्तद्गृह्यत्वम् ॥ द्विजातयो विप्राः। सुरया जिताः॥ गलनालिः कण्ठकाण्डम् ॥ क ॥

**राजेति** ॥ सलयश्चरणन्यासश्चारी ॥ ख ॥

**उत्क्षिप्त इति** ॥ पाणिपल्लवस्य पद्मरागशुक्तिः शोणमाणिक्यशिला चोपमानम्। हंसस्य तु पाण्डुपद्म इन्दुश्च ॥ ग ॥

**पाण्डिति** ॥ श्वेतसरोजलीनालिश्रेणिनिभं कण्ठं यो धारयति स ना पुरुषः कपाली कपालमाली। अर्धाच्छिवस्तव मङ्गलं क्रियात् ॥ १४ ॥

---

१ अवलोकयन्तः. २ व्यग्रसमस्तपरिजनः; समस्तव्यग्रपरिकरः. ३ विहसन्निव. ४ पक्षविक्षेपविलास. ५ माणिक्यशिलायाम्. ६ व्यराजत. ७ स्वरेण च. ८ विशेषमेव राजानम्.

अपिच।

सरलप्रियंगुणाढ्यं लम्बितमालं विचित्रतिलकं च।
वनमिव वपुस्तवैतत्कथमवनं नृप जनस्याभूत्[1] ॥ १५ ॥

अपिच।

वरसहकारकरञ्जकवीरतरोऽशोकमदनपुंनाग।
विविधद्रुममय राजन्कथमसि न बिभीतकः क्वापि ॥ १६ ॥

अपिच।

बाणकरवीरदमनकशतपत्रकबन्धुजीवकसुजाते।
नृप विविधविटपरूपस्तथापि विटपः कथं नासि ॥ १७ ॥

**सरलेति** ॥ सरला अकुटिलाः प्रिया यस्य। तथा गुणाढ्यं शौर्याद्याढ्यम्। तथा लम्बितस्रक्। तथा विविधपुण्ड्रं तव वपुर्जनस्यावनं रक्षकमभूत्। वनमिव तदा सरलप्रियंगुणेति समाहारद्वन्द्वः। तथा लम्बिनः प्रलम्बास्तमाला यत्र। तथा विशिष्टाश्चित्रकायास्तिलकवृक्षाश्च यत्र। नृपेत्यामन्त्रणे। कथमिति विरोधे। अवनशब्दस्य वनप्रतिषेधार्थत्वात् ॥ १५ ॥

**वरेति** ॥ वराः सहकारकाः सचिवादयो यस्य। तथा रञ्जयतीति रञ्जकः। तथा वीराणां शूद्रकादीनामिव तरो बलं जवो वा यस्येति संबुद्धौ न दीर्घः। न शोको यस्य। एतेन धीरत्वोक्तिः। मदन इव मदनः कामः। पुंनाग इति नागशब्दः प्रशंसायाम्। इत्यामन्त्रणैः प्रकृतोऽर्थः। विविधद्रुममयेतिपदाद्द्रुमार्थोऽप्यूह्यः। तद्यथा। सहकार आम्रः, करञ्जको नक्तमालः, वीरतरुर्नदीसर्जः। यदमरः— "नदीसर्जो वीरतरुरिन्द्रद्रुः ककुभोऽर्जुनः।" अशोकः कङ्केल्लिः, मदनः शल्यः, यत्फलं विवाहे वधूवरपाणौ बध्यते। पुंनागः सुरपर्णिका। कथमिति विरोधे। बिभीतकस्याक्षार्थत्वात्। प्रकृते तु बिभीतको विशेषेण भीत इति कुत्सायामनुकम्पायां वा कन् ॥ १६ ॥

**बाणेति** ॥ बाणः करवीरो दमनकः शतपत्रकं बन्धुजीवकं जातिश्चेति विटपाः। एतन्मयस्त्वमसि शब्दतः। अर्थतस्तु बाणाः करे यस्य। वीरान्दमयसि। शतसंख्यं पत्रं वाहनं यस्य। शेषादिति कप् ॥ बन्धून् जीवयस्युपकरोषि। शोभना जातिः क्षत्राख्या यस्य। उभयथाप्येतानि नृपेति च संबोधनानि। असीति स्वव्ययं त्वमित्यर्थे।

---

1 आसीत्. 2 मदनशोक.

राजा तु तदाकर्ण्य सविस्मयम् "अहो अस्य धैर्यं मनुष्यसंनिधौ, आश्चर्यं रूपे, माधुर्यं वाचि, प्राचुर्यं प्रज्ञायाम्, औदार्यमर्थे, गाम्भीर्यं वर्णव्यक्तौ । प्रायेणाहारमैथुननिद्राभयभ्रमणमात्रविवेकासु कथं प्रागल्भ्यमेतत्पक्षिजातिषु । तदेष विहंगव्यञ्जनः कोऽपि कामचारी भविष्यति । सर्वथा मनसापि नावज्ञेयाः केऽपि प्राणिनः । यतः कर्मतः कामतः शापतः संछन्नरूपाण्यपि भ्रमन्ति विविधाश्चर्यभाञ्जि भूतानि" इति चिन्तयन्नुचितज्ञस्तमीषदुल्लसितसिन्दुवारमञ्जरीभिरिव कुन्दकान्तदन्तदीप्तिभिरर्चयन्स्वागतमपृच्छत् ॥ क ॥

असावपि प्रणयप्रणतशिराः शुचिरोचिषां चयेन पाण्डुपुष्पप्रकरप्रकारेण प्रतिपूजयन्निव "देव, भवदवलोकनेनाह्लादितमनसो ममाद्य स्वागतम्" इति ब्रुवाणो राजानं रञ्जयांचकार ॥ ख ॥

अत्रान्तरे त्रासतरलतरतरत्तारकमकाण्डाडम्बरितबाष्पप्लवप्लवमानमिव वहन्ती चक्षुः, उत्क्षिप्तपक्षपत्रपल्लवव्याजेन संगृहीते सहचरे शाखोद्धारमिव दर्शयन्ती, हंसी दूरादवनिपालमवाप्य रौप्यमयघण्टाटंकारकोमलया गिरा श्लोकद्वयमपठत् ॥ ग ॥

"एकान्ते सेवते योगं मुक्ताहारपरिच्छदः ।
हंसः समोक्षयोग्योऽपि देव किं बध्यते त्वया ॥ १८ ॥

त्वं न विटान्पासीति विटपः । अपात्रभर्ता नेत्यर्थः । तथापि कथमिति विरोधोऽज्ञावने विटपशब्दस्य वीरुदर्थत्वात् ॥ १७ ॥

**राजेति** ॥ कामचारी विद्याधरादिः ॥ क ॥

**अत्रेति** ॥ शाखोद्धारमन्यायपूत्कारचिह्नं शाखाग्रहणम् ॥ ग ॥

**एकेति** ॥ अस्यापत्यमिः । इरिव इः कंदर्पप्रतिमः । ततः संबुद्धौ ए इति देव इति

---

१ राजापि. २ संनिधावपि. ३ विहंगमव्यञ्जनः. ४ यतः कर्मतः शापतो वा. ५ प्रच्छन्न. ६ भुवि भूतानि. ७ त्रासतरलतरतारकाण्डा; त्रासतरलतारमकाकाण्डा. ८ पक्षपल्लव. ९ रौप्यघण्टा. १० कचित्

**नीरञ्जनपदेतिष्ठन्विश्वसंसारसङ्गतः ।**
**हंसः किं बध्यते क्वापि यस्य नालम्बनं प्रियम् ॥ १९ ॥**

**अन्यच्च ।**

**राजन्, जलपक्षिणो मुनय इव येमीनाहारं वाञ्छन्ति, बहुधावनव्यसनिनः, बिसाधाराः । तदलमाग्रहेण" ॥ क ॥**

चोपच्छन्दयितुं संबोध्य मुमोचयिषुः पतिं, हंसी नृपमाह ॥ मुक्तहारो मौक्तिकहारस्तद्वत्परिच्छदौ पक्षती यस्य शुभ्रत्वात् । स तथोक्तः । कस्य जलस्यान्ते वर्तमानमगं द्रुमं यः सेवते । मोक्षस्य मोचनस्य योग्योऽपि स हंसो वाचेस्त्वया भवता किं किमर्थं बध्यते इत्येकोऽर्थः । अथवा एकान्त इति समस्तं विजनार्थम् । अथ च हंस आत्मा पुरुषः स मोक्षयोग्योऽपि निर्वाणार्होऽपि किं बध्यते । न बध्यत एवेत्यर्थः । कया । त्वया । त्वशब्दः सर्वादिगणेऽन्यार्थः । अतः पुरुषापेक्षयान्यया प्रकृत्येत्यर्थः । कस्मान्न बध्यत इत्याह—कान्ते कमनीये परमानन्दस्वरूपे ए कृष्णे त्यक्ताहारपरिवारः सन्योगमध्यात्मं यः सेवते ॥ अत्र पक्षे अ इत्यस्माद्विष्णुवाचकात्सप्तम्येकवचने ए इति रूपम् । यदि वा समोक्षयोग्योऽपीति समः समदर्शनः । अक्षयोग्योऽपि इन्द्रियसंबद्धोऽपि ॥ १८ ॥

**नीरेति** ॥ जनानां पदे स्थाने पुरग्रामादावतिष्ठन्यः सरस इदं सारसम् । तथा श्वसन्तीति श्वसाः प्राणिनः, वयः पक्षिणः श्वसा यत्र तथाभूतं नीरं जलम्, गतः स हंसः किं क्वापि बध्यते, न बध्यत एव । यस्य नलस्येदं नालं तृणसंबन्धि, वनं काननं प्रियम् ॥ अथवा नीरञ्जनपदे नीरागपदे तिष्ठन्हंस आत्मा किं क्वापि बध्यते, न बध्यत एव । यस्य विश्वेभ्यः संसारसङ्गेभ्य आलम्बनमासक्तिर्न प्रियम् । विश्वसंसारसङ्गत इति तसिलन्तम् ॥ १९ ॥

**राजन्निति** ॥ मीनो मत्स्यः । बह्विति भिन्नम् । बिसं पद्मिनीकन्द आधारो जीवनं येषाम् ॥ मुनिपक्षे अमी इति नेति च पदद्वयम् । बहुधा, अनेकधा वनव्यसनिनो वनस्थाः । तथा व्यपेतः साधारः साधारणतिथिपर्वोत्सवादिर्येभ्यः । लोकोत्तरवृत्तत्वात् । "बिसादनाः" इति पाठे तु बिसमदनं येषाम् । पक्षे विगतं सादनं येभ्यः । अपीडाकरा इत्यर्थः ॥ क ॥

१ आग्रहेणेति.

एवमुक्तवति तस्मिंस्तपस्विनि पुत्रार्थिनी कन्यालाभं मन्यमाना विप्रियं प्रियंगुमञ्जरी जरन्मञ्जीररवजर्जरविलक्षाक्षरया गिरा कुर्वाणेव क्रोधपरिस्पन्दं निन्दास्तुतिधर्मेण नर्मलीलाकलहमकरोत् ॥ क ॥

"नयशोभाजन, कृतकुटीककुशास्त्रग्राहिन्नवेदनोद्गारं कृतवानसि क्वापि। सर्वदानादेयेषु प्रतिकूलवर्तिषु जलेषु रतिं कुर्वाणः पाठीनहिंसको धीवर इवोपलक्ष्यसे। कुरङ्गेषु प्रीतिं बध्नासि। कदम्बैः कुरबकैर्बहुकदलीकैः पलाशप्रायैः कुजन्मभिः सह संवससि ॥ ख ॥

एवमिति ॥ क्रोधस्य परिस्पन्दं चेष्टां कुर्वाणेव ॥ क ॥

नयेति ॥ यशो भाजनेत्यामन्त्र्यस्य नञ्योगः । तथा कृतानि कृत्रिमाणि, नतु वेदवदपौरुषेयाणि । कुत्सितटीकानि कुशास्त्राणि गृह्णासीत्येवंशीलः । यस्मादवेदो वेदपाठरहितः । इदमपि द्वयमामन्त्र्यम् । क्वापि न उद्गारमुच्चारणं कृतवानसि । वक्तुमपि न वेत्सीत्यर्थः ॥ स्तुतिपक्षे नयश्च शोभा च ते जनयसि । यद्गृहमागतोऽसि तस्येति शेषः । तथा कृता कौ पृथिव्यां टीका गमनं येन । स्वर्गिणाप्यस्मदनुजिघृक्षयेति शेषः ॥ कुशो दर्भ एवास्त्रं गृह्णास्यवश्यम् । एतेनाद्दश्यशत्रूणामपि विघातोक्तिः ॥ वेदना दुःखं तदर्थमुद्गारमुच्चारणं क्वापि नाकरीः । एतेन प्रियंवदत्वोक्तिः ॥ निन्दायां अनादेयेष्वश्रद्धेयेषु जडेषु रतिं विदधद्धिंसको धीवर इवावबुध्यसे । धीवरोऽपि किल नादेयपयःसु कूलं कच्छं प्रति वर्तमानेषु रतिं कुरुते । पाठीनाहारत्वात् ॥ पक्षे सर्वकालमेव नदीभवेषु कूलं कूलं प्रति वर्तमानेषु वारिषु रागमासक्तिं कुर्वाणः पाठवान् 'न हिंसाशीलो' धिया बुद्ध्या वर एवावगम्यसे । एतेन तीर्थस्थायुर्दयालुत्वं ज्ञानी च ॥ कुत्सितो रङ्गो वासना येषां तेषु विषयेषु प्रीतिमान् ॥ पक्षे कुरङ्गा मृगास्तेषु प्रीतः ॥ कदम्बैः कुमातृकैः । कुत्सिता अम्बाः कदम्बाः ताश्च दुश्चेष्टितैः कुर्वन्ति आचक्षते वा इति णिजन्तादच्चि सिद्धम् । बहुव्रीहौ तु कोः कन्न भवति । कुत्सितो रवो येषां

१ कन्यालाभमलाभं मन्यमाना; कन्यालाभं विप्रियं मन्यमानाः. २ जर्जरिताक्षरविलक्षया. ३ वाचा.

किमन्यद्ब्रूमो वयम् ।
यस्य ते सदाचारविरुद्धः पुष्पवत्कान्तारागः एव प्रियः ॥ क ॥
तदलमनेन तापसहितेन कन्यावरप्रदानेन " इति ॥ ख ॥
एवमभिहितः सोऽपि तां बभाषे ॥ ग ॥
"दोषाकरमुखि, किं मामुपालभसे । प्रायः प्राणिनामीशः शंभुरेव शुभाशुभं कर्मालोक्य तुलाधर इव तुलितं फलमुपकल्पयति ॥ घ ॥
तथाहि ।

यद्यावद्यादृशं येन कृतं कर्म शुभाशुभम् ।
तत्तावत्तादृशं तस्य फलमीशः प्रयच्छति ॥ १७ ॥

अथवा ।
मत्तमातङ्गगामिनि, यस्यास्तवाप्रमाणालोचनश्रीः सा त्वं बलि-

तैः । कुत्सितमलीकं कदलीकम् । कोः कत् । बहु कदलीकं येषाम् । तथा पलं पिशितमश्नन्ति ये तेषां प्रायैः सदृशैः । तथा कुत्सितं जन्म येषां तथाविधैः सह वासं विधत्से ॥ पक्षे कदम्ब-कुरबक-कदली-पलाशा ये कुजन्मानः कौ पृथिव्यां जन्म येषामिति कृत्वा भूरुहस्तैः सह संवससि । मुनयो हि मृगनगप्रियाः । वनवासित्वात् ॥
यस्येति ॥ पुष्पवतीषु हि कान्तासु राग आसक्तिः । आचारविरुद्धः कुलधर्मानुचितः । पक्षे सदाचारेत्यामन्त्रणम् । विभिः पक्षिभी रुद्धः पुष्पवान्कान्तारस्यागस्तरुरेव प्रियः ॥ क ॥
तदिति ॥ तस्मात् तापस तपस्विन् हि स्फुटं ते तव संबन्धिना कन्यावरप्रदानेन नालं न पर्याप्तं नेष्टं पूर्यत इति यावत् । यतोऽहं पुत्रार्थिनीति । अथवा तापः संतापस्तत्सहितेन । पक्षे तापसेत्यामन्त्रणम् । तेनानेन कन्यावरप्रदानेनालं, नान्यत्प्रार्थनीयमित्यर्थः ॥
दोषेति ॥ दोषाणामाकरो मुखं यस्यास्तत्संबोधनम् ॥ पक्षे दोषाकरश्चन्द्रः ॥ घ ॥
मत्तेति ॥ मत्तः क्षीबो मातङ्गः शबरस्तद्वद्गच्छसि चेष्टसेऽवश्यम् ॥ स ह्यनुचितचेष्टः त्वमपि तथा क्षीबा ॥ म्लेच्छाभिगमस्त्वनुचितत्वान्न व्याख्येयः ॥ पक्षे मातङ्गो हस्ती ॥ यस्या भवत्या आलोचनश्रीर्विवेकसंपदप्रमाणा प्रत्यक्षादिप्रमाणापेता सा

१ उक्तः. २ आलोच्य. ३ तुलाधार. ४ अनकल्पयति.

संभ्रपावलग्ना कस्य नाधिक्षेपं जनयसि ॥ क ॥

तदलमनेनालापालसत्प्रपञ्चेन । गतो भूयिष्ठो दिवसः । स-मासन्नोऽस्माकमाह्निकसमयः[1] । सीदत्येषा ब्रह्मपरिषद्[2] । गगनम-ण्डलमध्यमारोहति[3] भगवानशेषकल्याणचिन्तामणिस्तरणिः[4] । अ-रविन्दारुणवदने[5] न नक्तं समयमनुपालयन्त्यमी मुनयः । अनु-मन्यस्व । यामो वयम्" ॥ ख ॥

इत्यभिहिता सा प्रियंगुमञ्जरी "महर्षे, मर्षणीयोऽयमेकस्त्य-[6]क्तकुलवधूधर्मो नर्मापराधः । स्वीक्रियन्तामेतानि[7] विविधान्युल्लस-

त्वं बलिनो बलवतो राज्ञः संभ्रमेऽवलग्नावष्टब्धा कस्य पूज्यस्यापूज्यस्य वा अधिक्षेपं तिरस्कारं न करोषि । सर्वस्यापि करोष्येव ॥ पक्षे लोचनश्रियः प्रसृत्यादिप्रमाणातिरिक्तत्वम् । बलिरुदररेखा । अवलग्नं मध्यम् । एवंविधा सा त्वं शुभलक्षणा कस्य आधिक्षेपं मनःपीडाया अपनोदं न करोषि ॥ क ॥

तदिति ॥ तस्माद् । अलं पूर्यतामनेन । आलापे संभाषे आलस्याभव्यस्य सतो भव्यस्य च प्रपञ्चेन विस्तारेण । प्रकृतं प्रक्रियत इति भावः ॥ उक्तयो हि सप्रतिपक्षा भवन्तीत्यालप्रतिषेधे सतोऽपि प्रतिषेधः ॥ तथाहि—"सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैव जनापवादचकिता जीवन्ति दुःखं सदा। अव्युत्पन्नमतिः कृतेन न सता नैवासता व्याकुलो युक्तायुक्तविवेकशून्यहृदयो धन्यो जनः प्राकृतः" ॥ अथवा । आलापस्य आलेनावस्तुरूपेण सन् न परमार्थेन सन् योऽसौ प्रपञ्चस्तेनालं निरर्थकत्वात् ॥ यदुक्तम्—"यदेवार्थक्रियाकारि तदेव परमार्थसत् " ॥ दारुणं नयशोभाजनपाठीनहिंसकेत्यादिकस्य मुनीनां प्रतिपादनाद्रौद्रं वदनं यस्यास्तस्याः संबोधनम् । न अरविं नक्तं समयम् । अपितु सरविं संध्यासमयं मुनयोऽप्यनुपालयन्ति ॥ नक्तमित्यनेन संध्या लक्ष्यते ॥ वयमपि मुनयस्ततोऽस्माकं संध्यावसर इत्यभिप्रायः ॥ स्तुतौ अरविन्दवदरुणं वदनं यस्यास्तस्याः संबोधनम् । नैते मुनयः संध्याकालमनु पश्चात्पालयन्ति ॥ अवश्यविधेयत्वात्तत्कालमेवेत्यर्थः ॥ तस्मादनुजानीहि यामो वयम् ॥ ख ॥

इतीति ॥ इत्युक्ता सा राज्ञी महर्षे इत्याद्यभिधायातिथ्यसत्क्रियायोग्यमुपादाय

---

१ माध्याह्निकसमयः. २ ब्राह्मी परिषद्. ३ गगममध्यम्. ४ भगवानेष. ५ लोचने. ६ मर्षणीयोऽस्माकमयम्. ७ एतान्युल्लसन्.

न्मयूखमञ्जरीरचितेन्द्रचापचक्राण्याभरणानि। वृह्यतामिदमिन्दुद्युतिधवलमनलशौचं चीनांशुकपट्टपरिधानयुगलमियं च कुसुममालिका" इत्यभिधायास्यान्यदप्यतिथिसत्कारोचितमुपढौक्य प्रसादनाय प्रणाममकरोत् ॥ क ॥

मुनिस्तु "गौरमुखि, वृत्तमुक्तोऽयं हारः, दोषालयमङ्गदम्, जघन्यपदाश्रयं काञ्चीदाम, सदापदाधिष्ठानं नूपुरम्, अलंकारो भवद्विधानामेव राजते। नास्माकम्। इयं च परिमलवाहिनी माला निबद्धमधुकरालापाचीनं वासश्च तवैवोचितम्" इत्यनेकधा श्लिष्टालापलीलयातिवाह्य काश्चित्कालकलाः करकलितकमण्डलुर्मण्डलेश्वरमापृच्छ्य तां च प्रियंगुमञ्जरीं जरठतमालनीलमम्बरतलमुदपतत् ॥ ख ॥

हर्षयितुं प्रणतिं चक्रे ॥ क ॥

**मुनिस्त्विति** ॥ वृत्तमुक्तो वर्तुलमौक्तिकः शीलरहितश्च ॥ दोषाशब्दो भुजपर्याय इति दोषा बाहू आलयो यस्य। दोषा अवद्यानि च ॥ यद्विश्वः—"दोषा रात्रौ भुजेऽपि च" ॥ जघने भवं जघन्यं गर्हितं च। तादृक् पदमाश्रयो यस्य ॥ सदा शश्वत् पदे पादावधिष्ठानमाश्रयो यस्य। पक्षे सतामप्यापदामासमन्तादधिष्ठानं नगरम्। आपदामाधेश्च स्थानमिति वाक्ये तु सुषामादित्वात्षत्वम् ॥ इति प्रकृतेऽलंकारस्य वर्णनं गौणवृत्त्या दूषणम्। तस्मादेवं दोषयुक्तोऽलंकारो युष्मादृशीनामेव भाति, नास्माकं यतीनाम्। यतो हि चारित्रमण्डनाः। नर्मणस्तु अलमत्यर्थं कारो राजभाग्यभागस्त्वादृशीनां राजपत्नीनां संगच्छते, नास्माकं वनवृत्तीनाम्। लोकस्योपकुर्म एव वयं, न कुतोऽपि किंचित्प्रतिगृह्णीम इति भावः ॥ इयं च सुगन्धिः सभृङ्गालापा स्रक्। चीनमंशुकं च तवैव युक्तं, नास्माकम्। यस्मात् परितो मलं वहति। तथा निबद्धमधुना समवेतसुरया कराला। एवंभूतासौ स्रक् ॥ अपाचीनं निकृष्टं च वासः ॥ इति समयं कंचिच्छ्लेषोक्तिभिर्निर्गमय्य गगनमुदगात् ॥ ख ॥

---

१ च मणताम्.

बिभ्रति विशदविपुलोल्लीलायमाने
स्फुरदुरुपरिवेषाकारकान्तौ मुनीन्द्रे ।
अथ गतवति तस्मिन्विस्मयोत्तानिताक्षः
क्षितिपतिरवतस्थे स्थाणुसंस्थां दधानः ॥ १८ ॥

स्थित्वा च तत्कथावस्थया काश्चित्कालकलाः कलापिकुलोत्कण्ठाकारिणि रणति नवजलधररवरमणीये मध्याह्नगम्भीरभेरीरवे शङ्खयुगलके, विशति बिसकाण्डकवलनमपहाय तीव्रतरतपनतापताम्यत्तनुनि नवनलिनीछदच्छायामण्डलमुपवनदीर्घिकावतंसे हंसकुले, कुमुदकुवलयाम्भोजपत्रपुञ्जपञ्जरान्तरमनुसरति परिहृतोष्णमधुनि मुकुलितपक्षपुटे षट्चरणचक्रवाले, चटुलाग्रिमखुरशिखरोल्लिखितधरणिमण्डलेषु खण्डितखर्वदूर्वानालनीलघुरघुरायमाणघोणाकोणेषु विमुच्यमानेषु पिपासातुरतुरंगेषु, घर्मविघूर्णितेषु ससूत्कारकरविमुक्तसीकरासारवर्षेणार्द्रिताङ्गणेषु मज्जनाय सज्जितेषु सेवागतराजकुञ्जरेषु, क्रीडागिरिसरितमवतार्यमाणेषु लीलामृगमिथुनेषु, पयोभिः पूर्यमाणासु पञ्जरपक्षिपयःपानपात्रीषु, उद्यानारघट्टतटीं टीकमानासु कोयष्टिमयूरमण्डलीषु, क्रीडासरःसरस्सु संगीतश्रमस्विन्नखिन्नकिंनरेषु, कूपकूलकुलायकोणकूणितेष्वातपातङ्काकुलकलविङ्केषु, भवनवनवापीपुलिनपालिपांसुपटलमुत्तप्तमपहाय शीतलशैवलावलिं श्रयति तरलितनक्रे, क्रेंकारयति क्रौञ्चचकोरचक्रवाकचक्रे, क्रीडाप्ररोपितप्राङ्गणप्रान्ततरु-

बिभ्रतीति ॥ विस्मयाभिश्चलाकृतिर्नृपः स्थाणुनोपमितः ॥ १८ ॥
स्थित्वा चेति ॥ राजापि निश्चलनेत्रस्तथा तमवलोक्य कंचिच्च समयं तत्कथा-

---

१ लीलायमान. २ कारिणी नव. ३ सखशङ्खः. ४ तापार्ते प्रततनलिनी. ५ खण्डिताखर्व. ६ दूर्वाङ्कुर; दूर्वाचय. ७ महाघर्म. ८ श्रमखिन्न. ९ क्रौञ्चचक्रवाक.

शिखरमध्ये मध्याह्नबलिपिण्डाय पिण्डिते केकारयति काकवयसां कर्णकटु कुटुम्बके, बकवलयवलक्षान्क्षिपति दिक्षु दीप्रान्दीधितिकण्डांश्चण्डरोचिषि, विसर्ज्य परिजनं राजा मज्जनभवनायोदचलत् ॥ क॥

गत्वा च पृथ्वीवलयमिव पयःपूर्णसमुद्रद्रोणीकम्, केदारोदरमिव सकलशालिस्थानम्, श्रोत्रियद्विजजनभवनमिव सकलधौतपट्टम्, अतिरमणीयं मज्जनभवनमवतारिताभरणः स्नानपीठे निषसाद ॥ ख ॥

आसन्नस्थितभास्यावसरपाठकः पपाठ ॥

"वररजनीकरकान्ते चित्राभरणे निशानभःसदृशे ।
तव नृप मज्जनभवने सविताना भाति परमश्रीः ॥ १९ ॥

भिरेवातिह्य मध्याह्नस्नानसद्मने प्रतस्थे ॥ क ॥

गत्वा चेति ॥ मज्जनगृहं गत्वा स्नानपीठे निषण्णः ॥ गृहं विशिष्यते । पयसां पूर्णा समुद्रा मुद्राङ्किता द्रोणी जलपात्री कुण्डिका यत्र ॥ स्नानीयजलादिषु मुद्रा दीयत इति राजधर्मः ॥ तथा कलशाः कुम्भास्तेषामालिः पङ्क्तिस्तया सह युक्तानि स्थानानि प्रदेशा यत्र ॥ तथा कलधौतस्य हेम्नः पट्ट आसनं तेन सह ॥ अन्यत्र पयःपूर्णः समुद्रो द्रोणी च यत्र ॥ द्रोणी देशविशेषः ॥ यद्विश्वः—"द्रोणी स्यान्नीवृदन्तरे" ॥ केदारोदरं तु समग्रशालिस्थानम् ॥ तथा सकलाः सर्वे धौताः क्षालिताः पट्टा आसनानि यत्र ॥ ख ॥

वरेति ॥ नृप इति संबोधने । अधुना तद्विशेषणानि ॥ वर श्रेष्ठ ॥ रजनीकरस्य चन्द्रस्येव कान्तिरस्येति चन्द्रद्युते ॥ रणे युद्धे चित्रो व्याघ्रस्तद्वदाभा अस्येति तथोक्त ॥ तथा निशानैस्तेजस्विभिर्बभस्तीति कृत्वा सुभटरम्य । अथवा निशानं निर्मलं बभस्ति शोभते ॥ तथा सदृश इः कामो यस्येति कृत्वा कंदर्पप्रतिम ॥ मज्जनसदने सविताना सोल्लोचा उत्कृष्टश्रीर्द्योतते ॥ अथ च मज्जनभवने सविता रविर्नाभाति ॥ परं केवलम् । अश्रीर्निष्प्रभ एवेत्युक्तिलेशः ॥ यतो निशायां यन्नभस्तत्सदृशे । प्रद्योतनानुद्योते हेतुरयम् ॥ तथा चित्राण्याभरणानि यत्र । नभःपक्षे चित्रा नक्षत्रम् ॥ तथा वरा श्रेष्ठा रजनी हरिद्रा तां कुर्वन्ति संस्कुर्वन्तीति

१ द्विजभवनम्.

अनन्तरमुत्तुङ्गकनककुम्भशोभास्पर्धिकुचमण्डलार्धबद्धोत्तरीयांशुकपरिकराः, सस्मेरस्मितविकारकारिण्यः, दर्शितसीत्काराङ्गमलनविन्यासाः, काश्चित्समुद्रवेला इव समकरोत्क्षिप्तामलकाः, काश्चित्तरुणतरुमञ्जरीराजय इव भृङ्गारभरभुग्नदेहाः; काश्चिदन्यायकारिण्य इव सभाजनोद्धूलनकराः, काश्चिन्मलयाचलभूमय इवोत्कृष्टगन्धधारितैलाः, काश्चिद्देवलोकवसतय इव चामरधारिण्यः, काश्चित्पुरंदरपुरंध्रिका इव सविभ्रमकङ्कतिकोपान्तेनाकेशप्रसादनमाचरन्त्यः, काश्चिद्विन्ध्याटव्य इव दर्शितविविधपादपालिकाः, काश्चिद्राघवसेना इव कृतप्रहस्तमलनाः, काश्चिद्व्याकरणवृत्तय इव बाहुलतां संवाहयन्त्यः, मज्जननियुक्ताः कामिन्यो राजानं स्नपयामासुः॥

कृत्वा रजनीकरा गन्धकारकास्तैः कान्ते। नभस्तु करो दीप्तिमान् सूर्यश्चावायो रजनीकरः शशी तेन कान्तम् ॥ १९ ॥

**अनन्तरमिति** ॥ परिकरमाबध्येति जघने पटीवेष्टिं कृत्वा कामिन्यो राजानमस्नपयन् ॥ समेनाविषमेण करेणोत्क्षिप्तान्यामलकानि यकाभिः । आमलकचूर्णं हि स्नानीयम् ॥ भृङ्गारः कनकालुका ॥ भाजनं पात्रम् । तत्रोद्धूलनं चूर्णविशेषः । तेन सह करः पाणिर्यासाम् । सभाजनोद्धूलनपाठे तूद्धूलनमुद्वर्तनम् ॥ उत्कृष्टानि उद्धृतानि गन्धधारीणि तैलानि याभिः ॥ चामरं प्रकीर्णकम् ॥ विशिष्टो भ्रमश्चलनं तेन सह या कङ्कतिका केशमार्जनी तस्या उपान्तेनासमन्तात्केशानां विरलीकरणमाचरन्त्यः ॥ पालिः पर्यायावसरः ॥ यदजयः—“पालिः कर्णलतायां स्यात्प्रदेशे पङ्क्तिचिह्नयोः । स्त्रष्टश्मश्रुस्त्रियामश्रौ पर्यायावसरे क्रमे” ॥ ततश्च दर्शिता विविधा पादपालिः पादमर्दनावसरो याभिः ॥ कृतं प्रकर्षेण हस्तमलनं याभिः ॥ बाहुलतामिति बाहुलतेवेति ॥ पक्षे मकरैः सह उत्क्षिप्तममलं कं जलं याभिः ॥ भृङ्गाणामार आगमनं तस्माद्यो भरः ॥ तथा अवाच्यवचनैः सभाजनस्योद्धूलनं मालिन्यं कुर्वन्त ॥ उद्धूलनपाठे तु सभाजनादुद्धूलनमपसरणम् ॥ उत्कृष्टगन्धधारिता एला ओषधिविशेषो याभिः ॥ चमरः स्रक् । अमरा देवाः ॥ सविभ्रमं सविलासं कं सुखं यत्र । कृतिकोपान्ते कियत्कोपविगमे

१ सस्मेर. २ दर्शितससीत्कार. ३ वलन. ४ तरुणमञ्जरी.

किं बहुना।

तास्तास्तं स्नपयामासुरङ्गनाः कुम्भवारिणा।
एत्य याः स्युः प्रसन्नेन द्युलोकात्कुं भवारिणा ॥ २० ॥

अथ विमलदुकूलप्रान्तनिर्नीरिताङ्गः
परिहितसितवासाः स्वल्पमाङ्गल्यभूषः
शुचिरुचितविधिज्ञः स स्वयं स्वस्थचित्तः
कुशकुसुमकरः सन्कर्म धर्म्यं चकार ॥ २१ ॥

अनन्तरमावर्तितानेकस्वर्णवल्लभो वल्लभो जनस्य भोजनस्य समये स मयेन निर्मितया तया सधर्माणं धर्मसुतसभया सभयागतजनजनितारम्भोऽरं भोजनस्थानवेदीं जनस्थानवेदी गतवान् ॥क॥

तस्यां च बहुविस्तीर्णस्वर्णभोजनपात्रपत्रशङ्खशुक्तिसनाथायामुपविष्टस्यास्य क्रमेण परिकरमाबध्य गाढमाढौकन्त स्वस्य स्वस्यानुहारिणोऽन्नविशेषानादाय सूपकाराः सूपकाराङ्गनाश्च ॥ ख ॥

नाकेशस्य दिवस्पतेः प्रसादनं कुर्वन्ति ॥ कवीति पुरंध्रिकाविशेषणं वा ॥ दर्शिता विविधाः पादपानामालयो याभिः ॥ प्रहस्तो रावणप्रतिहारस्तस्य मलनमभिभवः ॥ बाहुलता बाहुलक्रम् ॥

**ता इति** ॥ भवस्य संसारस्यारिः शिवस्तेन। प्रसन्नेन हेतुना। द्युलोकात्स्वर्गलोकात्। कुं पृथ्वीम्। एत्यागत्य। याः। स्युर्भवेयुः। तास्ताः स्त्रियः। तं कुम्भवारिणा कलशोदकेन स्नपितवत्यः ॥ २० ॥

**अथेति** ॥ निर्नीरितं निर्जलीकृतमुद्गमितमित्यर्थः ॥ २१ ॥

**अनन्तरमिति** ॥ आवर्तिता येऽनेके स्वर्णस्य वल्लास्तौल्यमानविशेषास्तद्भक्ता यस्य ॥ तथा वल्लभो दयितो लोकस्य भोजनस्य काले स राजा मयेन दैत्यवर्द्धकिना कृतया तया प्रतीतया युधिष्ठिरस्य सभया सधर्माणं सदृशीं भोजनस्थानवेदीम्। सभयानामागतानां शरणं प्रपन्नानां जनानां जनितरक्षोपक्रमः। अरमत्यर्थं जनानां स्थानवेदी लोकस्योचितासनज्ञः प्राप्तवान् ॥ क ॥

**तस्यां चेति** ॥ सूपकारा औदनिकाः सुष्ठूपकारकाश्च ॥ ख ॥

१ स्वस्थचेताः. २ कुसुमकुश. ३ जनितरक्षारम्भोऽरम्.

तथाहि ।

भक्तास्तस्य भक्तम्, मुद्रा मुद्गान्, मोदका मोदकान्, अशोकवर्तिन्योऽशोकवर्तीः, समांसा मांसम्, नानाशाकाः शाकानि, व्यञ्जना व्यञ्जनम्, अपरास्तु काश्चिदक्षीरा अपि क्षीरम्, अघारिका अपि घारिकाः परिवेषयामासुः ॥ क ॥

सोऽप्यधीशो भूभुजां भुञ्जानो भोज्यम्, लिहँल्लेह्यम्, आस्वादयन्स्वादु, चूषयञ्चूष्याणि, पिबन्पेयानि, आहारमकरोत् ॥ ख ॥

अनन्तरमाचम्य चन्दनेनोद्वर्तितपाणिपल्लवः[1] शीघ्रमाघ्राय धूपधूमम्, आस्ये निक्षिप्य[2] कस्तूरिकाकुङ्कुमकर्पूरकर्बुराणि[3] क्रमुकफलशकलानि, आदाय च वित्रस्तमृगतर्णकर्णकर्णाणि शुक्तिशुक्लानि ताम्बूलीदलानि, तस्मात्प्रदेशादपरमवकीर्णकुसुमहारि विस्तीर्णास्तीर्णस्वर्णमयवैडूर्यपर्यन्तपर्यङ्काङ्कमाप्तैः सह विनोदास्थायिकास्थानमगात्[4] ॥ ग ॥

तत्र च सकामकामिनीकमलकोमलकरपुटपीड्यमानपादपल्लवः नर्तयन्नाट्यपरिपाटीपटून्नटान्, भावयन्नमृतस्रुतः कविवाचः, वाचयंश्चिरंतनकविकथाः, शृण्वन्वीणाप्रवीणकिंनरमिथुनगीतानि,

**भक्ता इति** ॥ भक्ताः प्रसादकाः ॥ मुदं गच्छन्तीति मुद्राः ॥ मोदयन्तीति मोदकाः ॥ न शोके वर्ततेऽभीक्ष्णमशोकवर्ती नीनायको येषां यासां च ॥ समोंऽसो यासाम् ॥ नाना अनेकप्रकारा आशा येषां यासां च ॥ शेषाद्विभाषेति कप् ॥ विशिष्टाञ्जनाः ॥ अक्षीणि ईरयन्ति विभ्रमात्कम्पयन्ति ॥ अघस्य पापस्य अरिकाः शत्रुरूपाः ॥ भक्तमित्यादि कर्मपदानि भक्ष्यार्थानि ॥ परिवेषणमत्र भोजनस्य भाजने क्षेपणम् ॥क॥

**अनन्तरमिति** ॥ त्रस्तस्य हि मृगशावस्य कर्णौ स्तब्धौ भवतः । ताम्बूलीदलान्यपि तादृशीति भावः ॥ ग ॥

---

1 चन्दनोद्दर्तित. 2 विक्षिप्य. 3 कस्तूरिकाकर्पूर. 4 विनोदस्थानम्.

आलोकयँल्लोचनोत्सवकरान्विलासिनीलास्यविलासान्, वादयन्मृदुवाद्यविशेषान्, अवधारयन्वांशिकवाद्यवेणुनिक्वाणान्, कलगिरः पाठयन्पञ्जरशुकान्, कान्ताकुचकुम्भमण्डलावष्टम्भलीलयापराह्णसमयमतिवाहितवान् ॥ क ॥

क्रमेण च चषकायमाणविकचकमलमध्यमधुपानमत्त इव पुनर्वारुण्याशयाऽभिभूतभासि मदादिव लोहितायमाने निपतति मुक्तांशुकेऽशुमालिनि, वनान्तरतरुशिरःश्रितशाखाशिखरेषु गलद्बहलकिञ्जल्कपुञ्जपिञ्जरासु मञ्जरीष्विव विलम्बमानासु दिनकरदीधितिषु, विस्तीर्णशिलावकाशजघनायामुल्लसल्लोहिताधरपल्लवायामस्ताचलवनराजिरेखायामुपरि पतितमवलोक्य रागिणमहर्पतिमीर्ष्यारोषभरादिव जाते जपापुष्पनिचयरुचि पश्चिमाशामुखे, मुखरयति नभो निजनीडनिलयनाकूतकूजितजरदण्डजव्रजे, व्रजति सरः संध्याविधिविधित्सया द्विजन्मजनमुनिनिकाये, कालागुरुरसाञ्जनराग इव श्यामलयति गगनलक्ष्मीमभिसारिकाबन्धावन्धकारे, राज्ञः संध्यावसरमावेदयन्किंनरमिथुनमिदमगायत् ॥ ख ॥

"भोगान्भो गाङ्गवीचीविमलितशिरसः प्राप्य शंभोः प्रसादा-

क्रमेणेति ॥ अन्योऽपि मधुपानेन माद्यति। पुनः पुनर्मधुवाञ्छया निष्प्रभः स्यात्। तथा क्षीबतया आरक्तः सन्निर्वस्त्रो भूमौ पतति ॥ विस्तीर्णशिलावकाश एव जघनं श्रोणी यस्याः ॥ तथा उल्लसन्तो रक्ता अधरा अधःस्थिताः प्रवाला यस्याः। ईदृश्यामस्ताचलारण्यराजौ उपरिष्टात्प्राप्तं रागिणं रक्तं द्युमणिं वीक्ष्य रोषादिव पश्चिमदिगानने रक्ते जाते ॥ अन्यस्या अपि मुखमीदृग्गुणायामपरकान्तायामनुरागिणमुपरि पतितं पतिमवलोकयेर्ष्यावशाद्रक्तं स्यात् ॥ ख ॥

भोगानिति ॥ भोगानित्यनन्तरो भोःशब्द आमन्त्रणे। गाङ्गोर्मिभिर्निर्मलीकृता-

---

१ वाद्यमानवेणु. २ निक्वणान्. ३ पतति. ४ तरूच्छित. ५ शिखरप्रगलत्. ६ रुचिरुचिरे. ७ निलयनाकुल. ८ कूजितैर्जरद्; कूजितवति जरद्. ९ रसाङ्गराग. १० आवेदयितुम्.

मोहान्मोहानभिज्ञाः क्वचिदपि भवत प्राणिनो दर्पभाजः ।
यस्माद्यः स्मार्तविप्रप्रणतिनुतपदः सर्वसंपन्नभोगो
भास्वान्भाः स्वाङ्गभूता अपि स परिहरन्नस्तमेव प्रयाति" २२

एतदाकर्ण्य नरपतिः सांध्यं विधिमन्वतिष्ठत् ॥ क ॥

क्रमेण प्रचुरचलच्चाषकुलकालकान्तिकाशिभिर्बहलतमः कल्लोलैरालोडिते लोके लीकेश्वरो विहितविकालवेलाव्यापारः पारसीकोपनीतपारावारपारीणपारावतपतत्रिपञ्जरसनाथे विकीर्णवालधूलिनि धूपधूममुचि विचित्रचित्रशालिनि प्रान्तप्रदीपितदीपदीप्तिखण्डखण्डिततमसि सज्जितशय्ये शय्यागृहे गृहीतस्पृहणीयाङ्गरागो रागसागरकल्लोलनयानया प्रियया प्रियंगुमञ्जर्या अलीककलहकोपकुटिलभ्रमभ्रूकोणतर्जनजनितस्मितः स्मरविकारकारिकरिकलभकुम्भविभ्रमायमाणोत्तुङ्गपीवरकुचकुम्भपीठमारोपितो रजनीमनैषीत् ॥ ख ॥

एवमस्य सकलसंसारसुखपरम्परामनुभवतो यान्ति दिवसाः॥ग॥

कदाचिच्चारुचामीकराचलचलद्देहाधिदेवतेव बहुधानन्दने सु-

ङ्गस्य शंभोः शिवस्य प्रसादाद् भोगान् प्राप्य 'भो दर्पभाजः प्राणिनः' मोहात्सकाशात् ऊहानभिज्ञा अविमर्शकाः क्वचिदपि विषये मा भवतेति । मायोगेऽपि सानुबन्धकत्वाद्विधौ पञ्चमी ॥ यस्माद्धेतोः स्मार्तविप्रैः प्रणामसमये स्तुतपादपद्मः । तथा सर्वसंपत् सकलश्रीको । नभोगो वियद्गामी च यो भास्वान् रविः । सोऽपि स्वाङ्गभूता भा दीप्तीः परिहरन् एष भवतां प्रत्यक्षोऽस्तं प्रयाति सर्वे सुलभा दुर्लभाश्च संपन्ना भोगा अस्येत्युक्ताभिहितम् । तस्मादेवंविधस्य महात्मनोऽपि रवेरस्तं विलोक्य शंभोराराधनादिकार्ये न प्रमदितव्यमित्यर्थः ॥ २२ ॥

कदाचिदिति ॥ बहुधा नन्दयति हर्षयति यस्तस्मिन् । यौवनारम्भे । सुष्ठु रुचिरिच्छा रवः स्वरो यस्याः । शोभनाभिलाषा कलभाषिणी च । सुरतं मोहनमेवोत्सव-

---

१ क्रमेण च. २ चाषकुलकान्ति. ३ बहलतमतमः. ४ दीपप्रदीप. ५ कल्लोललोललोचनया. ६ पीवर. ७ कुलकुम्भकण्ठपीठ. ८ आरोपितकरः.

रुचिरवायावेव वनारम्भे सुरतोत्सवमनुभवन्ती [illegible] प्रि-यंगुमञ्जरी गर्भं बभार ॥ क ॥

तेन च विकचचूतमञ्जरीव कोमलफलबन्धेन बन्धुररमणीयाकृतिः, चन्द्रकलेव कलाप्रवेशेनोपचीयमानप्रभा, प्रभातवेलेवोन्मीलदंशुमालिमण्डलेनानन्द्यमाना, रत्नाकरतरङ्गमालेवान्तःस्फुरन्माणिक्यकान्तिकलापेनोल्लासमाना, गर्भसंदर्भितेन लावण्यपरमाणुपुञ्जेन व्यराजत राजमहिषी ॥ ख ॥

गच्छत्सु च केषुचिद्दिवसेषु सुवृत्ततुहिनाचलगण्डशैलयुगलमिव बालमयूरिकाक्रान्तम्, अनङ्गसौधशिखरद्वयमिव शेखरीकृतेन्द्रनीलकलशम्, उज्ज्वलरौप्यनिधानकुम्भयुग्ममिव भुजंगसंगतमुखम्, उल्लासिहंसमिथुनमिव चञ्चूत्खातपङ्किलकमलकन्दम्, ऐरावतमस्तकपिण्डपाण्डुरमुच्चचूचुकश्यामलिम्नाऽलंकृतमापूर्यमाणमन्तःक्षीरेण क्षणं क्षणमखिद्यत पयोधरद्वन्द्वमुद्वहन्ती ॥ ग ॥

बबन्ध च चन्द्रकलाङ्कुरकवलने स्पृहाम् ॥ घ ॥

अभिलाषमकरोच्च चञ्चलचञ्चरीककुलकलरवरमणीयविकचचूतवनविहारेषु ॥ ङ ॥

स्पर्शममन्यत बहु बहलमभ्यर्णविकीर्णविकसितकमलवननि-

मनुभवन्ती प्रियंगुमञ्जरी गर्भं दधे ॥ चामीकराचलो मेरुस्तस्य चलदेशा अधिष्ठातृदेवतेव ॥ सोऽपि बहुधानेकधा नन्दनाख्ये वनारम्भे सुष्ठु अतिशयेन रुचिरवायौ सुरताया देवत्वस्योत्सवमनुभवति ॥ आरम्भणमारम्भः आदिरित्यर्थः ॥ नन्दनं हि वनानामादिरग्र्यं प्रधानमित्यर्थः ॥ यदिवा वनान्यारभ्यन्तेऽनेनेति कृत्वा वनारम्भः। शतानन्देन हि प्रथमं नन्दनं सृष्ट्वा तद्वृक्षावयवैर्बीजशाखादिभिरितरवनानि जगति सृष्टानि॥क॥

तेनेति ॥ कुसुमान्तर्गूढः फलारम्भकरसकणिकारूपो बन्धः कोमलफलबन्धः॥ख॥

---

१ बन्धुरा. २ अंशुनांशुमाली. ३ लावण्यपुण्यपरमाणु. ४ बालमयूर. ५ संगतम्. ६ कमलकोमलकन्दम्. ७ पिण्डमिवोपरि मदलुभ्यद्भ्रमदलिकुलालंकृतं पाण्डुरम्. ८ क्षीरेण क्षणमखिद्यत. ९ बहुलम्.

[illegible]मकरन्दबिम्बोर्मितरतरंग[illegible]मारुतस्य ॥ क ॥

चिन्तयांचकार च चतुरुदधिलावण्यवरसमास्कन्दयितुम् ॥ ख ॥

अभ्यवाञ्छदतुच्छमच्छमशेषममन्दमन्दरमन्थानमन्थोत्पन्नम-मृतमातृप्ति पातुम् ॥ ग ॥

इत्यनेकधोत्पन्नगर्भप्रभावादनुरूपदोहदसंपत्तिसंपन्नाधिकक-मनीयकान्तिरुल्लसद्बहलमृगमदजललिखितविचित्रपत्रभङ्गभव्यवि-पुलकपोलमण्डलेन मुखेन शशाङ्कमन्तःस्फुरत्कलङ्कमुपहसन्ती द्विगुणमवनिपतेस्तस्य प्रिया प्रियंगुमञ्जरी बभूव ॥ घ ॥

तथाहि ।

सा समीपस्थितज्येष्ठा पयःपूर्णपयोधरा ।
अग्रप्रावृडिवाह्लादमकरोत्तस्य भूपतेः ॥ २३ ॥

एवमविरतविविधवाञ्छोत्सवाविच्छेदकर्तरि भर्तरि, संज्ञयैवा-ज्ञाकारिण्यपारे परिवारे, बहुभङ्गिभाग्योपभोगक्रमेणातिक्रामति कुत्रचित्काले, कालकलाकुशलश्लाघनीये पूर्णप्राये प्रसवसमये, विलीनजात्यशातकुम्भभासि भास्वत्युदयमारोहति, हततिमि-रासु दिक्षु क्षणमेकं सा प्रसववेदनाव्यतिकरमन्वभूत् ॥ ङ ॥

ततश्च

प्रभासंयोगिविख्यातं योग्यं नालस्यकर्मणः ।

सा समीपेति ॥ समीपे स्थिता ज्येष्ठा वृद्धस्त्रियो ज्ञातप्रसवस्वरूपा यस्याः ॥ तथा पयसा क्षीरेण पूर्णौ पयोधरौ स्तनौ यस्याः ॥ सा प्रियंगुमञ्जरी तस्य राज्ञो मुदमकरोत् । अग्रं प्रावृषोऽग्रप्रावृट् आषाढवर्षाः ॥ तत्पक्षे समीपे स्थितो ज्येष्ठः शुक्रो मासो यस्याः ॥ तथा पयसा जलेन पूर्णः पयोधरो मेघो यस्याः ॥ भुवो हि प्रावृट् परमोप-कारिणीति भुवः पत्युराह्लादं करोति ॥ २३ ॥

प्रभेति ॥ कान्तिसंयोगि । विख्यातं प्रसिद्धम् । नलस्य नृपतेरिदं नालम् । कर्म

१ तरङ्गशीतलमाहृतस्य. २ अभ्यवाञ्छदच्छ. ३ मथनोत्पन्न. ४ शशाङ्कमङ्क. ५ भूभृतः. ६ परिजने. ७ अङ्गभोग्योपभोग. ८ क्षणमिव सा.

पृथ्वीव पुण्यतीर्थं सा कन्यारत्नमजीजनत् ॥ २४ ॥

तत्र च दिवसे 'विकसितकुमुदकुन्दकान्तकीर्तनीयकीर्तिसुधया धवलानि करिष्यत्येषा प्रवर्धमानास्मन्मुखानि' इति प्रियादिव प्रसन्नाः समपद्यन्त दश दिशः। 'मा स्म पुनरस्मद्गुणानेषापहार्षीत्' इत्यपहृतैकैकसारगुणाः सभया नमस्यन्त इव तस्यै कुसुमाञ्जलिममुञ्चन्निन्द्रादयो देवाः। स्वकान्तिसर्वस्वापहारभयादिव दिवि ननृतुरप्सरसः। 'किमस्याः समं समुत्पन्नमन्यदपि कन्यारत्नम्' इत्यन्विष्यन्त इव परितः परिबभ्रमुः सुरभयः समाः समीरणाः ॥क॥

किं बहुना।

अमन्दानन्दनिष्यन्दमपास्तान्यक्रियाक्रमम्।
जगज्जन्मोत्सवे तस्याः पीतामृतमिवाभवत् ॥ २५ ॥

अथ बहोः कालादनुरूपप्रौढप्रहरणप्राप्तिप्रीतहृदयेनास्फोटितमिव सकलजगद्विजयव्यवसायसाहसिकेन कुसुमसायकेन, चिरादुचिताश्रयलाभमुदितमनसा स्फूर्जितमिव शृङ्गाररसेन, शुचिकाशकुसुमहास्येन योग्यसहकारिकारणोपलम्भपूर्णमनोरथेन वल्गितमिव वसन्तमासेन, निजकर्मणः सफलतां मन्यमानेनोच्छ्वसितमिव मलयानिलेन, चिरकालोपलब्धश्लाघ्याधारतया हसित-

अगण्यपुण्यात्मकं तस्य। योग्यमुचितम्। कन्यारत्नम्। सा। अजीजनदुत्पादयामास ॥ पृथ्वी पुण्यतीर्थमिव। तदपि प्रभासाख्यम्। योगिभिर्योगमार्गरतैर्विख्यातम्। आलस्य असारस्य कर्मणो न योग्यम् ॥ अथ च आलस्यकर्मणो न योग्यम्। किं तर्हि उद्यमक्रियायोग्यम्। ततस्तदर्थं केनापि न प्रमदितव्यमिति भावः ॥ २४ ॥

तत्र चेति ॥ कन्यारत्नान्वेषिणो हि। सुरभयः सौरभ्यवन्तः। समा सश्रीकाश्च भवन्ति ॥ क ॥

---

१ कान्ति. २ प्रवर्धमाना शश्वदस्मत्. ३ इन्द्रादयः. ४ स्वविकासहासयोग्य. ५ आधारया.

मिव रूपसंपदा, विकसितमिव लावण्यलक्ष्म्या, प्रनृत्तमिव समस्तस्त्रीलक्षणाधिदेवतया, कलकलितमिव कान्तिकलापश्रिया ॥क॥

किं बहुना ।

सर्गव्यापारखिन्नस्य बहोः कालाद्विधेरपि ।
आसीदिमां विनिर्माय श्लाघ्यः शिल्पपरिश्रमः ॥ २६ ॥

एवमस्याः सततविस्तीर्णस्वर्णपूर्णपात्रपूजितपूज्यद्विजन्मनि संपन्ने नामकर्मसमये संमान्य मान्यजनं जनेश्वरो वरप्रदानमनुस्मृत्य दमनकमुनेः 'दमयन्ती' इति नाम प्रतिष्ठितवान् ॥ ख ॥

क्रमेण च प्रचुरामृतसंसिक्ता इव सुकुमाराः प्रसर्तुमारभन्ताङ्गावयवपल्लवाः, चकार च चञ्चच्चामीकररुचिरुचिराङ्गणमणिवेदिकासु कैश्चिद्दिवसैरनुच्चचरणप्रचारचारुचापल्यलीलाः, सहासमकरोत्परिजनं जनयन्ती बालकेलीः, स्वच्छन्दमानन्दयांचकार पितरं तरङ्गभङ्गिरङ्गितेन, जननीमजीजनज्जातविस्मयां स्मितमुग्धदर्शितदन्तकान्तिकुन्दपुष्पमनिष्पन्नाक्षरमल्पाल्पं जल्पन्ती ॥ ग ॥

किं बहुना ।

अपि रेणुकृतक्रीडं नरेणुक्रीडयान्वितम् ॥
तस्याः प्रौढं शिशुत्वेऽपि वयो वैचित्र्यमावहत् ॥ २७ ॥

एवमियमनवरतस्वैरविहाराहारिणि क्रमेणातिक्रामति शैशवे वयसि पितुर्नियोगाद्गुरूपदेशात्साधुवृद्धसंवासाद्बुद्धिविकासाच्च ना-

अपीति ॥ रेणुना कृता क्रीडा यत्र ॥ तथा 'कस्त्वां परिणेष्यति, त्वं कस्मै दातव्या' इत्याद्युक्तिभिर्नरे पुंसि विषये अणुक्रीडान्वितमल्पक्रीडाकरम् । तस्याः संबन्धि । वयः । शैशवेऽपि प्रौढं वैचित्र्यं दधौ ॥ अपिर्विरोधार्थः । स च तुल्यार्थव्याख्यया ॥२७॥

---

१ विलसितमिव. २ सामात्यजनो जनेश्वरः. ३ अमृतरससंसिक्ताः. ४ बालकेलिम्. ५ तरत्तरङ्ग. ६ रिङ्खितेन. ७ स्मितमुग्धदुग्धस्निग्धदर्शित. ८ कान्तिजितकुन्द. ९ एवमस्या अनवरत. १० विहार.

तिचिरेण, प्राप्ता नैपुण्यं पुण्यकर्मारम्भेषु, जाता प्रवीणा वीणासु, निराकुला कुलाचारेषु, कुशला शलाकालेख्येषु, विशारदा शारदीयेषु, प्रबुद्धा प्रबन्धालोचनेषु, चतुरा चातुरनाथजनचिकित्सासु॥ क॥

किं चान्यत्।

अकरोदनालस्यं लास्ये, आप प्राधान्यं धन्योचितव्यवहारेषु, वैचित्र्यं चित्रेषु, चातुर्यं तौर्यत्रिके, कौशलं शल्योद्धारे, पाटवं पटहवादने, वैमल्यं नवमाल्यग्रथने, प्रागीत्यं गीतयास्र, प्राकाम्यं काम कथासु॥ ख॥

किं बहुना।

न तत्काव्यं न तन्नाटचं न सा विद्या न सा कला।
यत्र तस्याः प्रबुद्धाया बुद्धिर्नैव व्यजृम्भत॥ २८॥

एवमस्याः शैशव एव निजजरठप्रज्ञाप्रज्ञातज्ञातव्यवस्तुविस्तरायाः क्रमेण तिलकभूतं नूतनचूतवनमिव वसन्तप्रवेशप्रथमपल्लवोल्लासेन, प्रत्यग्रघनसमयमहीमण्डलमिवामन्दविदलत्कन्दलकलापेन, केसरिकिशोरकण्ठपीठमिव नवकेसराङ्कुरोद्गारेण, करिकलभकपोलस्थलमिव प्रथममदोद्भेदेन, निशावसाननभस्तलमिव प्रभातप्रारम्भप्रभाप्रभावेण, सरःसलिलमिव विदलितकोमलकमलकान्तिसंतानेन, मनोहारिणा संसारसारभूतेनाभूष्यत वपुः कान्ततरतारुण्यावतारप्राक्प्रारम्भेण॥ ग॥

ततश्च।

परिहरति वयो यथा यथाऽस्याः

अकरोदिति॥ प्रगीता प्रसिद्धा तस्या भावः प्रागीत्यम्॥ ख॥

१ समबन्धा. २ चतुरातुरा. ३ चित्रे. ४ शल्योद्धारेषु. ५ कथायाम्. ६ विजृम्भते. ७ प्रज्ञातव्य. ८ विगलत्. ९ प्रभातप्रभा. १० प्रसरेण. ११ विदलत्. १२ वयः.

स्फुरदुरुकन्दलशालि बालभावम् ।
द्रढयति धनुषस्तथा तथा ज्यां
स्पृशति शरानपि सज्जयन्मनोभूः ॥ २९ ॥

अपि च ।

मुञ्चन्त्याः शिशुतां भरादवतरत्तारुण्यमुद्राङ्कित-
स्फारीभूतनितान्तकान्तवपुषस्तस्याः कुरङ्गीदृशः ।
उन्मीलत्कुचकाञ्चनाब्जमुकुले यूनां मुहुः पश्यतां
बाह्योरन्तरमन्तरायसदृशा मन्ये निमेषा अपि ॥ ३० ॥

ततश्च

तत्तस्याः कमनीयकान्तविजितत्रैलोक्यनारीवपुः
शृङ्गारस्य निकेतनं समभवत्संसारसारं वयः ।
यस्मिन्विस्मृतपक्ष्मपालिर्चलनाः कामालसा दृष्टयो
नो यूनां पुनरुत्पतन्ति पतिताः पाशे शकुन्ता इव॥३१॥

अपि च ।

आबध्नत्परिवेषमण्डलमलं वक्त्रेन्दुबिम्बाद्बहिः
कुर्वंश्चम्पकजृम्भमाणकलिकाकर्णावतंसक्रियाम् ।
तन्वङ्ग्याः परिनृत्यतीव हसतीवोत्सर्पतीवोल्बणं
लावण्यं ललतीव काञ्चनशिलाकान्ते कपोलस्थले ३२"

एतदाकर्ण्य राजा रञ्जितस्तत्कथया पुनरुदञ्चदुच्चरोमाञ्चकञ्चुकितकायस्तत्कालमेवान्तः स्फुरन्मन्मथमनोरथभरभज्यमानमानसस्तं हंसमपृच्छत् ॥

"पक्षिराज राजीववनावतंस हंस, पुनः कथ्यतां तस्याः संप्रति वयोवृत्तवृत्तान्तव्यतिकरः" ॥

१ मुद्राङ्कितम्. २ अपि च. ३ वपुः. ४ चलनाः. ५ उज्ज्वलम्. ६ तदाकर्ण्य. ७ उदञ्चद्रोमाञ्च.

इत्युक्तः पुनरेषे तं बभाषे।[1]

"देव, किमेकोऽस्मद्विधः पक्षी क्षीरतरङ्गधवललोचनां तां वर्णयेत्। यस्याः सर्वदेवमय इवाकारो लक्ष्यते[2] ॥ क ॥

तथा हि ।

सुतारा दृष्टिः, सकामाः कटाक्षाः, सुकुमाराश्चरणपाणिपल्लवाः[3], सुधाकान्ति स्मितम्, अरुणो दन्तच्छदः[4], भास्वन्तो दन्ताः, सुकृष्णाः केशाः, प्रबुद्धा वाणी, गौरी कान्तिः, गुरुः स्तनाभोगः, पृथ्वी जघनस्थली, सुरभिर्निःश्वासः, सुगन्धवाहः प्रस्वेदः, सश्रीकः सकलाङ्गभोगः ॥ ख ॥

किं चान्यत् ।

नक्षत्रमयीव निर्मिता विधिना[5] ॥ ग ॥

तथाहि ।

भद्रपदा ज्येष्ठा सुहस्ता पूर्वोत्तरा सार्द्रहृदया मूलं कंदर्पस्य ॥ घ ॥

सुतारेति ॥ तारा कनीनिका देवी च ॥ कामः अभिलाषः स्मरश्च । सम्यक् कामो येभ्यः । तुमः समश्च काममनसोर्मलोपः ॥ सुकुमाराः कोमलाः । तथा महेन्द्रवत्कार्तिकेयोऽपि सुकुमारः ॥ सुधावत्कान्तिरस्येति सुधाकान्ति शुभ्रं चन्द्रश्च ॥ अरुण आरक्तो रविसारथिश्च ॥ भास्वान् दीप्यमानः सूर्यश्च ॥ कृष्णो मेचको विष्णुश्च ॥ प्रबुद्धा व्युत्पन्ना । बुद्धः सुगतः ॥ गुरुर्विशालो बृहस्पतिश्च ॥ पृथ्वी पृथुला भूश्च ॥ सुरभिः सुगन्धिर्वसन्तश्च ॥ गन्धवाहः परिमलवाही वायुश्च ॥ श्रीः कान्तिर्लक्ष्मीश्च ॥ ख ॥

भद्रेति ॥ भद्रं पदं पादन्यासो यस्याः ॥ ज्येष्ठा प्रथमापत्यम् ॥ शोभनौ हस्तौ यस्याः ॥ पूर्वमुत्कृष्टमुत्तरं वचो यस्याः ॥ सार्द्रमनिष्ठुरं हृदयमस्याः ॥ कामस्य मूलं कारणम् ॥ पक्षे भद्रपदा ज्येष्ठा हस्तः पूर्वा उत्तरा आर्द्रा मूलं नक्षत्राणि ॥ घ ॥

---

1 एवं तं बभाषे; एष बभाषे. 2 विभाव्यते. 3 सुकुमारश्चरणपल्लवः. 4 अधरपल्लवः. 5 सा विनिर्मिता.

किं बहुना ।

लावण्यातिशयः स कोऽपि मधुरस्ते केऽपि हग्विभ्रमाः[1]
सा काचिन्नवकन्दलीमृदुतनोस्तारुण्यलक्ष्मीरपि ।
सौभाग्यस्य च विश्वविस्मयकृतः सा कापि संपद्यया
लग्नानङ्गमहाग्रहा इव कृताः सर्वे युवानो जनाः"॥३३॥

राजा—"ततस्ततः" ।

हंसः—"ततस्तस्याः पुनरिदानीं
दूराभोगभरेण भुग्नगतिना श्लिष्टा[2] नितम्बस्थली
धत्ते स्वर्णसरोजकुड्मलकलां[3] मुग्धं स्तनद्वन्द्वकम् ।
आलापाः स्मितसुन्दराः परिचितभ्रूविभ्रमा दृष्टय-
स्तस्यास्तर्जितशैशवव्यतिकरं रम्यं वयो वर्तते ॥३४॥

तदेष तस्याः सकलयुवजनमनोमयूरवासयष्टेः समस्तसंसार-सारसौन्दर्याधिदेवतायाः कथितो वृत्तान्तः ॥ क ॥

किमन्यत् ।

हरचरणसरोजाराधनावाप्तपुण्य-
परमसुकृतकन्दो वन्दनीयः स कोऽपि ।
अपि जयतु[4] स यस्तां दुर्लभां लप्स्यतेऽस्मि-
न्निति कथितकथः सन्सोऽपि[5] हंसो व्यरंसीत् ॥ ३५ ॥

इति श्रीत्रिविक्रमभट्टस्य कृतौ दमयन्तीकथायां हर-चरणसरोजाङ्कायां तृतीय उच्छ्वासः समाप्तः ॥

लावण्येति ॥ नवकन्दलीवन्मृद्वी तनुर्वपुर्यस्याः ॥ ३३ ॥

इति विषमपदप्रकाशमेतं दमयन्त्यां तनुते स्म चण्डपालः ।
शिशुमतितिलकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥ १ ॥

इति श्रीचण्डपालविरचिते दमयन्तीकथाविवरणे तृतीय उच्छ्वासः समाप्तः ॥

---

1 दृष्टिभ्रमाः. 2 स्पृष्टा. 3 तुलाम्. 4 जयति. 5 सोऽथ; योऽथ.

## अथ चतुर्थ उच्छ्वासः ।

एवमेतदाकर्ण्य राजा तत्कालमाघूर्णितमाश्चर्येण, आकुलि-तमौत्सुक्येन, आमन्त्रितमुत्कण्ठया, कटाक्षितं कंदर्पेण, अभि-वादितं रणरणकेन, ज्योत्कारितमाग्रहग्रहेण, पृष्टकुशलमकाल-तरलतया, स्वीकृतमस्वास्थ्येन, अवलोकितं चिन्तया चेतः स्वं स्वयमेव स्वस्थीकृत्य वितर्कितवान् ॥ क ॥

"प्रायः सैव भवेदेषा पान्थादश्रावि या मया ।
युगायितं विनिद्रस्य यत्कृते मे त्रियामया ॥ १ ॥

तदेतन्मे

तद्वार्तामृतपानार्थि भूयोऽपि श्रवणेन्द्रियम् ।
तृप्यते केनवानन्दकन्दे कान्ताकथानके ॥ २ ॥

तत्किमेनं पुनः पृच्छामि ॥ ख ॥

नेदं नायकस्थानम् ॥ ग ॥

अतः संप्रति

मण्डलीकृतकोदण्डः कामः कामं विचेष्टताम् ।
न व्यथिष्ये स्थितः स्थैर्ये धैर्यं धामवतां धनम्" ॥ ३ ॥

एवमेतदिति ॥ क ॥

प्राय इति ॥ यदर्थं मे मम विगतनिद्रस्य त्रियामया राज्या युगेनेवाचरितम् ॥ या च पथिकान्मया श्रुता । सैवेयं हंसेनापि कथिता प्रायो भवेत् ॥ युगं कृतयुगादि । त्रियामयेति त्रिसंख्यामितप्रहररात्रिवाचकत्वेन साभिप्रायम् । प्रायःशब्दो वितर्के ॥१॥

नेदमिति ॥ नायकस्य ईदृशं स्थानं स्थितिरौचित्यं न भवतीत्यर्थः ॥ यतो धैर्यं हि नायकपदं परमं वदन्ति ॥ ग ॥

---

१ आकाङ्क्षितम्. २ झात्कारित. ३ आग्रहेण. ४ आपृष्ट. ५ आलोचितम्; आलोकितम्. ६ धैर्यं हि महतां धनम्.

इति वितर्क्य विहसन्हंसमाबभाषे—“साधु भोः सुभाषितामृतमहोदधे, साधु । श्रुतं श्रोतव्यम् । इदानीं भद्र भूयिष्ठो दिवसः । तद्वयं वयस्य, समासन्नाह्निकसमयाः समुचितव्यापारं साधयामः ॥ क ॥

भवतापि

एताः सान्द्रद्रुमतलचलच्चक्रवाकीचकोराः
क्रीडावापीपरिसरभुवः स्थीयतां स्वेच्छयेति ।
यत्रोन्मीलत्कमलमुकुलान्याश्रयन्त्याः कुरङ्ग्यो
भृङ्गश्रेण्याः श्रवणसुभगं गीतमाकर्णयन्ति ॥ ४ ॥

अपिच ।

अतिललिततरं तरङ्गभङ्गै-
रिदमपि तृड्वरवारि वारि वाप्याः ।
भ्रमदलिनिवहं वहन्ति यस्मि-
न्महिमकरं मकरन्दमम्बुजानि ॥ ५ ॥

त्वमपि भद्रे वनपालिके, कृतकमलमालानितम्बकक्रीडमिममादाय भुक्तावसानास्थानगोष्ठीस्थितस्य मम समीपमेष्यसि” इत्यभिधाय राजा राजभवनमयासीत् ॥ ख ॥

गते च राजनि राजीविनीनां जीवितसमाः समास्वादयन्स्वादुकोमलमृणालकन्दलीः, दलयन्दलानि, कवलयन्बहलमधुरस्निग्धमुकुलानि, अनुशीलयञ्शीतलशैवलावलीः, विलासेन स हंसस्तरस्तरङ्गान्तरेषु चिरं चिक्रीड ॥ ग ॥

अतीति ॥ यस्मिन्वारिणि महिमकरं माहात्म्यकरं भ्रमद्भृङ्गगणं मकरन्दं पद्मानि वहन्ति ॥ तदिदं वाप्या वारि तरङ्गभङ्गैरतिचारुतरं वर्तते ॥ किंविशिष्टम् । तृष्णातिशयं वारयति छिनत्ति । पूर्ववृत्तक्रीडावापीभूकथनापेक्षयापिशब्दोऽत्र समुच्चये ॥ ५ ॥

---

१ गतः. २ समयसमुचितम्. ३ स्वेच्छयैव. ४ बहुल. ५ मधु. ६. स्निग्धमुग्ध. ७ हंसस्तरङ्गभङ्गान्तरेषु; हंसस्तरङ्गान्तरेषु.

चिन्तितवांश्च "तेन राज्ञा 'कृतकमलमालानितम्बकक्रीडमिममादाय मत्समीपमेष्यसि'. इति श्लिष्टार्थमिवादिष्टा वनपालिका । तन्न युक्तमिह चिरं स्थातुमिति ". ॥ क ॥

इत्यस्थान एवाशङ्कमानः सह तेन राजहंसकदम्बकेनाम्बरतलमुदपतत् ॥ ख ॥

तत्र च व्यतिकरे दिवापि स्फारस्फुरत्तारामण्डलमिव, विकचनवकुवलयवनगहनमिव, अन्तरान्तरोन्निद्रकुमुदखण्डमुड्डीनाऽऽस्ते क्षणमशोभयन्त नभस्तलम् ॥ ग ॥

अविलम्बिताश्च न चिरादवापुर्वैदर्भमण्डलमण्डनं कुण्डिनपुरम् ॥ घ ॥

अवतेरुश्च चकितचलच्चक्रवाकालोक्यमानकृतान्धकारविभ्रमभ्रमद्भ्रमरभरभज्यमानाम्भोजभाजि राजभवनासन्नकन्यान्तःपुरोद्यानक्रीडासरसि ॥ ङ ॥

संरभसप्रधावितेन सरस्तीरविहारव्यसनिना कन्यकाजनेन निवेदितांस्तानवलोकयितुमतिकौतुकेन दमयन्ती कन्यान्तःपुरात्पुराणमदिरारुणायताक्षी क्षिप्रमाजगाम ॥ च ॥

आगत्य च चटुलतरचरणचञ्चूप्रहारविदलितारविन्दकन्दला-

**चिन्तितेति** ॥ तेन राज्ञा इत्यमुना प्रकारेण श्लिष्टार्थमिव यथा भवति तथैव वनपालिकादिष्टा ॥ इतीति किम् । यत् कृता कमलमालाया नितम्बके घनप्राये मध्यप्रदेशे क्रीडा येनेति राजाभिप्रायः ॥ मालाशब्दगतस्त्रीत्वेन कमलमालायाः साक्षात्स्त्रीत्वाध्यवसायान्नितम्बशब्दः स्वावयवोऽपि तदर्थमात्रे प्रयुक्तः ॥ हंसेन त्वेवं प्रतीतम् । यथा कृतकं कृत्रिमं कापटिकं वा ॥ तथा अलमत्यर्थम् । आलानितं बद्धम् ॥ तथा बकवत् क्रीडा यस्य ॥ तादृशमिमं गृहीत्वा मत्समीपमायास्यसीति ॥ क ॥

---

१ श्लिष्टाक्षरम्. २ अस्थानम्. ३ अम्बरमुदपतत्. ४ विकचकुवलयगहनम्. ५ तत्क्षण. ६ एवायुः. ७ कुण्डिनं पुरम्. ८ नवाम्भोजराजिभाजि. ९ रभस. १० कन्दलानुनालनलिनी.

नुत्तालबालनलिनीवनविहारिणस्तान्ग्रहीतुमेकैकशः सखीजनमादिदेश ॥ क ॥

स्वयं च चलवलयचारुरववाचालितप्रकोष्ठेन सविलासं विस्मयकरं करपल्लवेन तं[4] राजपुत्री राजहंसमुच्चिक्षेप ॥ ख ॥

पाणिपङ्कजस्थित एव सोऽप्यभिमुखीभूय विभाव्य च चेतश्चमत्कारकारिणमस्याः[5] कान्तिविशेषमाशिषमदात्[6] ॥ ग ॥

"कंदर्पस्य जगज्जैत्रशस्त्रेणाश्चर्यकारिणा ।
रूपेणानेन रम्भोरु दीर्घायुः सुखिनी भव ॥ ६ ॥

अपिच ।

निर्माय स्वयमेव विस्मितमनाः सौन्दर्यसारेण यं
स्वव्यापारपरिश्रमस्य कलशं वेधाः समारोपयत्[7] ।
कंदर्पं पुरुषाः स्त्रियोऽपि दधते[8] दृष्टे च यस्मिन्सति
द्रष्टव्यावधिरूपमाप्नुहि पतिं तं दीर्घनेत्रं[9] नलम्" ॥ ७ ॥

दमयन्ती तु तस्मिन्क्षणे "कं संस्कृतवाचः पक्षिणो[10] विवक्षितवाचश्च" इति मनसि विस्मयं भयं च, "नामाप्याह्लादजननं[11] नलस्य" इति वपुषि वेपथुं रोमाञ्चं च, हृदयेऽनुरागमौत्सुक्यं च, समकालमुल्लोलायमानमुद्वहन्ती चिन्तयांचकार ॥ घ ॥

"सोऽयं यस्तेन पान्थेन यान्त्या गौरीमहोत्सवे ।
नलोऽप्यनल एवासीद्वर्णितो मे पुरः पुरा" ॥ ८ ॥

कंदर्पस्येति ॥ रूपेणेत्युपलक्षणे तृतीया ॥ रम्भावदूरू यस्याः ॥ "ऊरूत्तर–" इत्युक्ति संबुद्धौ ह्रस्वत्वम् ॥ ६ ॥

निर्मायेति ॥ दर्पमहंकारं पुरुषाः कं दधते । न कमपीत्यर्थः ॥ स्त्रियः पुनः कंदर्पं मन्मथं दधते । सकामा भवन्तीत्यर्थः ॥ अपिः पुनरर्थे समुच्चये वा ॥ ७ ॥

सोऽयमिति ॥ यो नलः स कथमनलः ॥ परिहारे त्वनलो वह्निः । स्मरसंतापहेतुत्वात् ॥ ८ ॥

---

१ चलद्वलय. २ चारुमाचालित. ३ सविलासविस्मयकरम्. ४ ते राजहंसं राजपुत्री. समुच्चिक्षेप. ५ कारणम्. ६ सदृशम्. ७समारोपयन्. ८स्त्रियो विदधते. ९ दीर्घनेत्रे. १०क पक्षिणः. ११जनकम्.

अथास्याः सखी परिहासशीला नाम नाम्नैव नलस्पोत्त्रिप्तब-हलपुलकाङ्कुरामिमामवलोक्य नर्मालापमकरोत् ॥ क ॥

कोष्णं किं नु निषिच्यते तव बलातैलं सखि श्रोत्रयो-
रन्तस्तित्तिरिपक्षिपत्रमथवा मन्दं मृदु भ्राम्यति ।
येनाङ्गेषु निखातमन्मथशरप्रस्फारपिच्छच्छवि-
र्नीलीमेचकितोच्चकञ्चुकरुचं रोम्णां वहत्युद्गमः ॥ ९ ॥

दमयन्ती तु तस्याः सवैलक्ष्यस्मितमेवोत्तरं कल्पयन्ती शनैः शिरःकम्पतरलितावतंसोत्पला सलज्जा चलद्विलोचनान्तेन तामतर्जयत् ॥ ख ॥

अवादीच्च तं राजहंसम् "अहो महानुभाव, सर्वथाश्चर्यहेतुरसि॥ग तथाहि ।

द्रष्टव्यानुरूपं रूपम्, महाश्चर्यगर्भाः प्रपञ्चितवाच्या वाचः, सूचितसंस्कारातिरेको विवेकः, सौजन्याश्रयः प्रश्रयः, निष्कारणोपकारधात्री मैत्री ॥ घ ॥

तत्त्वमनेकधा जनितविस्मयो बहु प्रष्टव्योऽसि ॥ ङ ॥

किं तु प्रस्तुतं पृच्छामः ॥ च ॥

कथय।कोऽयमात्मरूपसंभावितकंदर्पदर्पदावानलो नलो नाम॥छ

कोष्णमिति ॥ सखीत्यामन्त्रणे । न्विति वितर्के । तव कर्णयोर्मध्ये किं बलातैलं निषिच्यमानमस्ति । किं वा मृदुतित्तिरिपिच्छं मन्दं भ्रमदस्ति ॥ येन हेतुना । अङ्गेषु शरीरावयवेषु । निमग्ना ये कामशराः । तेषां प्रस्फाराणि पिच्छानि तद्वच्छविर्यस्य स तथोक्तो रोम्णामुद्गमो रोमाञ्चो नील्या ओषधिविशेषेण मेचकितस्य श्यामलितस्य उच्चकञ्चुकस्य कान्तिं दधाति । प्रस्फारत्वं पिच्छानामप्रवेशे हेतुः । अन्यथा शरेषु प्रविष्टेषु पिच्छान्यपि कथं न प्रविष्टानि । तेन पिच्छच्छविरिति कविराचष्टे ॥ ९ ॥

---

1 परिहासशीला नाम सखी. 2 बलात्तैलम्. 3 शरमासार. 4 रुचिम्.

यस्यैतानि मन्दरमथनक्षणक्षुभितक्षीरसागरतरङ्गभ्रमभ्रान्तिभाञ्जि भ्रमन्ति यशांसि" ॥ क ॥

इत्येवमुक्तः सोऽपि "सुन्दरि, यथेवमुपविश्यताम्। अवधीयतां मनः। श्रूयतां संविश्रब्धम्" इत्यभिधाय कथयितुमारब्धवान् ॥ ख ॥

"अस्ति समस्तसुरासुरलोककर्णपूरीकृतकान्तकीर्तिकुन्दकुसुमः, कुसुमायुधरूपरमणीयदेहप्रभः, प्रभावयुक्तो विप्रभावश्च, शुचिरनुपतापकारी च, घनागमसमयो न वारिबहुलश्च, शिशिरस्वभावो न जाड्ययुक्तश्च, रामः कुशलवयोरामणीयकेन, जनको वैदेहभागेन, नैषधः प्रजानां पतिः, विरिञ्च इव नाभिभूतः समरे, वीरो वीरसेनो नाम ॥ ग ॥

यस्य च बहुशोभयाङ्गप्रभया सह स्फुरत्युदारा मनोवृत्तिः,

अस्तीति ॥ प्रभावो माहात्म्यम् । विप्राणां भां तेजोऽवतीति ॥ विरोधे विगर्तेतार्थः ॥ शुचिः पुण्यम् । विरोधे तु ग्रीष्मः ॥ यद्विश्वप्रकाशः—"शुचिः शुद्धेऽनुपहते शृङ्गाराषाढयोः" इति । "ग्रीष्मे हुतवहेऽपि" इति ॥ घनः प्रचुर आगमः सिद्धान्तो यस्य । वा समुच्चये । अरिः शत्रुः । विरोधे घनागमसमयो वर्षाकालः । स च वारिबहुलो भवति ॥ शिशिरः शीतो माघफाल्गुनौ च । जाड्यं मौर्ख्यं हिमं च ॥ इत्युष्णवर्षाशीतकालव्यतिरेकः ॥ तथा कुशलेन चतुरेण वयोवस्थासौन्दर्येण रामश्चारुः । तथा विदेहा देशास्तेषामयं वैदेहो भागस्तेन जनकाख्यनृपतिप्रतिमः । अन्यत्र रामो दाशरथिः । वै वितर्के । देहस्य भां कान्तिं गच्छति व्याप्नोति इति कृत्वा डप्रत्यये देहप्रभागेन शरीरकान्त्यनुहारिणा रामणीयकेन सौन्दर्येण । कुशस्य लवस्य च जनको जनयिता ॥ नैषधो निषधदेशीयः । प्रजापती राजा । समरे युद्धे न कदाचिदभिभूतः । विरञ्चस्तु विष्णुनाभेर्भूतो जातः ॥ ग ॥

यस्य चेति ॥ अत्र प्रथमातृतीययोः श्लेषः । बहुश इति भिन्नम् । अभया भयरहिता । तृतीयान्ते बह्वी शोभा यस्यां तया ॥ तथा अखण्डो नयः षाड्गुण्यं यस्या-

१ मन्थान. २ विभ्रम. ३ मन्ति; क्रन्ति. ४ श्रोतव्यं श्रूयतामिति. ५ विश्रब्धम्. ६ आरभत. ७ पतिः प्रजानाम्. ८ विरञ्चिरिव; विरिञ्च इव.

अखण्डनप्रार्थनया सदृशी राजते राज्यस्थितिः, सज्जया सेनया सह श्लाघनीया कृपाणयष्टिः ॥ क ॥

यश्च सशृङ्गारो नारीषु, वीरो वैरिषु, बीभत्सः परदारेषु, रौद्रो द्रोहिषु, सहास्यो नर्मालापेषु, भयानकः सङ्ग्रामाङ्गणेषु, सकरुणः शरणागतेषु ॥ ख ॥

यस्य[1] च चतुरुदधितटीटीकमानशरच्चन्द्रविशदयशोराशिराजहंसस्य, निस्त्रिंशता कृपाणेषु, कुचातुर्यं कलत्रेषु, कूपदेशसेवा[3] पापर्धिकेषु, लुब्धकपर्यायः कैवर्तकेषु, तीक्ष्णता शस्त्रेषु, धर्मच्छेदो धनुर्विद्यायाम् ॥ ग ॥

एवमस्य[4] हरस्येव करस्थं कृत्वाशेषमण्डलमनवरतविख्यातविजयाभिनन्दिनः[5], सुन्दरकैलासनाभिरम्यवनान्तरेषु विहरतः, मदननिरुद्धनैषधीपीनोच्चकुचकुम्भावष्टम्भमसृणितवक्षःस्थलस्य सुखेनातिक्रामन्ति दिवसाः ॥ घ ॥

म् । तृतीयायां न खण्डनमस्याः ॥ तथा सङ्क्षोभनो जयो यस्याः । सेनापक्षे सज्जया प्रवणया ॥ क ॥

**यस्य चेति** ॥ निस्त्रिंशता खड्गत्वम् ॥ कुचाभ्यामातुर्यं दुर्वहभरत्वात् ॥ कूपप्रदेशस्य सेवामृगयाभ्यासेषु तथा लुब्धक इति 'पर्यायः एकार्थं शब्दान्तरम्' ॥ तथा धर्मनामा द्रुमो यन्मयं धनुर्विधीयते । तस्य छेदः कर्तनम् ॥ कृपाणादिष्वेव निस्त्रिंशतादीनीति परिसंख्योक्त्या न तस्येति शेषः । तस्य राज्ञो न । निस्त्रिंशता क्रूरकर्मत्वम् ॥ कुत्सितं चातुर्यम् ॥ तथा कुत्सित उपदेशो येषां तेषां दाम्भिकानां सेवा ॥ तथा कुत्सितो लुब्धो लुब्धकः । तस्य पर्यायः परिणामः ॥ तीक्ष्णता आयःशूलिकत्वम् ॥ धर्मस्य पुण्यस्य च्छेदः ॥ ग ॥

**एवमस्येति** ॥ करे राजभागे स्थितमशेषं मण्डलं देशम् । अनवरतप्रथितविजयैर्हृष्टस्य । कं जलम् । एला लता । असनः पीतमालः । तैः सुन्दरैरभिरम्येषु काननविशेषेषु । विचरतस्तस्य सकामनिषधस्त्रीपीनोच्चकुचकुम्भयोरवष्टम्भेन मसृणितं वक्षःस्थलं यस्य

१ द्रोहेषु. २ यस्य चतुरुदधि. ३ कूपसेवा. ४ एवं तस्य. ५ विजयानन्दिनः.

कदाचिच्चतुरुदधिवेलावलयितवसुंधराविख्यातमपत्यमभिलषन्न नादरचरणाङ्गुष्ठनिष्ठ्यूतकैलासोन्मूलनागतपतद्दशवदनविरसविरुतविहसितामरमण्डलीमहितमहिमानमनवरतविरिञ्चिरचितविचित्रनामसामवस्तुस्तुतिमनवरतसकललोककल्याणकामधेनुमनुपमवर्चसमर्चयांचकार भगवन्तमम्बिकापतिम् ॥ क ॥

अतिभक्तितोषितहरलब्धवरश्च निरुपमरूपयानुरूपया रूपवत्यभिधानया प्रधानया प्रियया सह मकरकेतनकेलिफलमनुभवन्नतिचिरमासांचक्रे ॥ ख ॥

अतिक्रामति तु कियत्यपि समये संपन्नसत्वा समपद्यत रूपवती ॥ ग ॥

तेन च समस्तसंसारसारवस्तूद्धृतकान्तिकणकलितगर्भारम्भेण, नारायणनाभिरिव विरिञ्चोत्पत्तिकमलकन्दबन्धेन, कल्पपादपलतेव पल्लवारम्भोच्छ्वासेन, मनाङ्मेदुरितोदरा रराज राजीवनयना राजपत्नी ॥ घ ॥

क्रमेण च मेचकोच्चचूचुककुचकुम्भकपोलपालिपाण्डिम्ना निम्नयन्ती मृगलाञ्छनच्छायमवाञ्छदच्छामृतपयःपिष्टमूर्तिमन्मधुसमयमदनमृगाङ्कमण्डलरसेनात्मानमालेप्तुम् ॥ ङ ॥

तथोक्तस्य सतः सुखेन यान्ति दिवसाः ॥ विहरणकृतमिह हरेण सहौपम्यम् । तदा । करः पाणिः ॥ शेषाख्यो नागः । तस्य मण्डलं कुण्डलाकारं वपुः ॥ विजया गौरीसखी ॥ नन्दी हरप्रतीहारः ॥ कैलासो गिरिः ॥ नाभिर्मुख्यार्थः ॥ घ ॥

कदेति ॥ निष्ठ्यूतं निरसनम् । "निष्ठापितम्" इति पाठे तु निःशेषेण स्थापनम् । अविरतम् । विचित्रनामभिर्भर्ग-भगवत्त्रिनेत्रादिभिः । सामवेदार्थैश्च । विरञ्चेन विरचितस्तुतिम् ॥ क ॥

क्रमेणेति ॥ कुचकुम्भस्य चन्द्रमाः । मेचकचूचुकस्य लाञ्छनमुपमानम् ॥ अ-

१ कदाचिदपि २ विरुति. ३ अविरत. ४ विरिञ्चि. ५ विरचित. ६ अनवरतमवनत. ७ रूपया च. ८ सकल. ९ कणकलाप. १० विरिञ्च. ११ अनुलेप्तुम्.

अथ तः सखीजनविधृतमपास्य मणिमयमुकुरमण्डलमनवरत-
निशातनिर्मलकरवालतलेष्वास्यमुखकमलमवलोकयांचकार ॥क

निरस्य नीलोत्पलमजरठकण्ठीरवकण्ठकेसरस्तबकमकरोत्क-
र्णावतंसम् ॥ ख ॥

अतिबहलकुङ्कुमाङ्ककस्तूरिकापङ्कमपहाय मत्तमातङ्गमदकर्दमेन
निजभुजशिखरयोर्विरचयांचकार विचित्रपत्त्रभङ्गान् ॥ ग ॥

एवमन्तःस्फुरद्गर्भानुरूपदोहदसुखमनुभवन्ती कदाचिदुच्चस्था-
नस्थिते सौम्यग्रहग्रामे, महाराजजन्मोचितेऽह्नि शुभसंभारकार-
णायां कालवेलायां जातप्राये प्रभाते प्रभाप्रताननितपरिवेषम-
शेषतेजस्वितेजःपुञ्जापहारिणमालोहितपादपल्लवोल्लसितपङ्कज-
च्छायम्, द्यौरिव रविमण्डलम्, उन्नमन्मेघमालेव विद्युल्लोलम्,
अरणिरिव वितानवैश्वानरम्, नरपालप्रिया प्रीणितगोत्रं पुत्रम-
जीजनत् ॥ घ ॥

तत्र च दिवसे

सांशुकोन्नतवंशस्य तस्य राज्ञः पुरस्य च ।
बभूव लक्ष्मीः सा कापि यया स्वर्गोऽपि निर्जितः ॥१०॥

च्छममृतमेव यत्पयो नीरं तेन पिष्टो घृष्टो योऽसौ मूर्तिमतां मधुसमयमदनमृगाङ्कमण्ड-
लानां रसः । तेनालेप्तुमात्मानमियेष ॥ क ॥

**एवमन्तरिति** ॥ द्यौरपि प्रगे रविमण्डलं जनयति । तमपि दीप्तिततिकृतवेष्ट-
नम् ॥ तथा समस्तदीपप्रभृतितेजस्वितेजोमुषम् । पादाः किरणाः । पुत्रपक्षे आ ईषत्
लोहितौ पादपल्लवौ तयोरुल्लसितपङ्कजवच्छाया यस्य ॥ तथा विद्युतां लोलनं लोलो
विलासः ॥ मण्डलः पुंस्यपि ॥ घ ॥

**सांशुकेति** ॥ राज्ञः पुरस्य च सा काचिदजनि शोभा । ययेश स्वर्गच्छतीति
कृत्वा स्वर्गो देवः स्वर्गलक्षणो लोकश्च जितः । अंशुना रविणा सह सांशुक उन्नतो

---

१ मुखम्. २ संसार. ३ पल्लवोपहसित.

अपि च ।

> सवृद्धबालाः कालेऽस्मिन्मुक्ताहारविभूषणाः ।
> प्राप्ताः प्रीतिं पुरे पौरा वनेषु च तपस्विनः ॥ ११ ॥

सूतीगृहे च

> अलंकृतनिशान्तेन तरुणारुणरोचिषा ।
> प्रदीपानां प्रभा तेन प्रभातेन यथा जिता ॥ १२ ॥

चिरात्पल्लवितं राजवंशेन, समुच्छ्वसितं राज्यश्रिया, प्रीतं प्रणयिभिः, प्रनृत्तं पौरैः, प्रमुदितं बान्धवैः, विद्राणं द्रोहिजनैः, उन्नदितं विपर्यस्तमङ्गलवादित्रैः, चित्रायितमतिबहलपरिमलपतत्पुष्पवृष्ट्या, विकसितं दिग्वधूवदनारविन्दैः, विलसितमतिसुरभिसुखस्पर्शसमीरणेन, स्वच्छन्दायितं बन्दीकृताराातिरमणीभिः, आढ्यायितमर्थिलोकेन ॥ क ॥

वंशो यस्य । रवेर्वंशस्य च तुल्यमुदयनमिष्टम् । प्रगे तस्याप्युदितत्वात् । पुरं च सपताकोच्छ्रितवेणुकम् ॥ १० ॥

**सवृद्धेति** ॥ वृद्धः पितामहादिः । बालः पुत्रादिः । ताभ्यां सह ॥ मौक्तिकहारालंकरणाः । पौराः ॥ मुनयस्तु सवृद्धकेशाः कूर्चादेरसंस्कारात् ॥ तथा मुक्ता आहारा यैः ॥ तथा व्यपेतभूषाश्च ॥ ११ ॥

**अलमिति** ॥ तेन प्रभातेनेव प्रदीपानां प्रभा जिग्ये ॥ अलंकृतं निशान्तं गृहं येन ॥ तथा तरुणारुणो मध्याह्नार्कस्तद्वद्रोचिर्यस्य ॥ अत एव दीपप्रभा निष्प्रभा । महात्मनां हि भूयिष्ठेन तेजसा दीपप्रभाप्यभिभूयते ॥ प्रभातेन तु अलमत्यर्थम् । तरुणया नूतनया अरुणस्य रविसारथे रोचिषा । कृतो निशाया रात्रेरन्तो येन ॥ यद्वा अरुणरोचिषा लोहितकान्तिना तरुणोपलक्षितेन प्रभातेन ॥ तत्समये हि दिनकरकरस्पर्शात्तरवो रक्तीभवन्ति ॥ १२ ॥

**चिरादिति** ॥ चित्रायितं भक्तिविशेषविन्यासायितम् ॥ कुमारजन्मोत्सवे गुप्तीनां मोक्षणाद्बन्दीनां स्वाच्छन्द्यम् ॥ आढ्यत्वे त्यागातिशयो हेतुः ॥ क ॥

---

१ सूतिकागृहे च. २ चित्रीयितम्. ३ अर्थिलोकैः.

किं बहुना ।

> अवृष्टिनष्टधूलीकमशरन्निर्मलाम्बरम् ।
> अपीतमत्तलोकं च जगज्जन्मोत्सवेऽभवत् ॥ १३ ॥

भूते च विभवभूयिष्ठे षष्ठीजागरणव्यतिकरे, अतिक्रान्तेषु च सूतकदिवसेषु नामकरणोचितेऽह्नि "न लास्यति धर्मधनान्येष साधुभ्यः" इति ब्राह्मणाः प्रविश्य तस्य "नलः" इति नाम प्रतिष्ठापयामासुः ॥ क ॥

क्रमेण च चतुरुदधिवेलावनविकासोचितकीर्तिकुन्दकन्दलैर्विश्वविश्वंभराभिलम्भलम्पाकैः कुमारसेवकैरिव सकलचक्रवर्तिचिह्नैरलंकृतावयवो विस्तरजटालवालः कल्पपादपाङ्कुर इव वर्धितुमारभत ॥ ख ॥

विरचितचूडाकरणादिसंस्कारक्रमश्च प्राप्ते विद्याग्रहणकाले निमित्तमात्रीकृतोपाध्यायः स्वयमेव समस्तानवद्यविद्याम्भोनिधेः परं पारमवाप ॥ ग ॥

तथाहि ।

प्रबुद्धबुद्धिर्बौद्धे, सविशेषशेमुषीको वैशेषिके, विख्यातः सां·

अवृष्टीति ॥ वृष्ट्या हि धूली नश्यति । शरदा चोरमलता । पानेनोन्मादः । यचेदृशं तदन्तरेणापि जगदजायत स तदुत्पत्तिप्रभावः ॥ १३ ॥

भूते चेति ॥ प्रविश्येति । निमित्तात्सामुद्रिकलक्षणाज्जन्मलग्नाद्वा साधूनां धनाग्रहणे अन्तर्मुखमभिप्रायमाश्रित्येत्यर्थः ॥

क्रमेणेति ॥ कुमारसेवका युवराजानुचराः । तदुपमैः राजचिह्नै रेखाकृतैश्चक्रचापकुलिशादिभिर्भूषिताङ्गः ॥ तथा विस्तरन्तो जटालाः स्वभावजटाबन्धा वालाः कचा यस्य ॥ वृत्तचूडाकरणस्य हि केशा विजटीभवन्ति ॥ कल्पवृक्षस्तु प्रसरन्मूलालवालः ॥ ख

प्रबुद्धेति ॥ विषमवृत्तलक्षणं छन्दः ॥ कल्पः पितृदेवताद्याराधनविधिशास्त्रम् ॥ अ·

---

१ लात्येष धर्मधनानि. २ शुश्रुषाणः. ३ कन्द. ४ विश्वंभरालम्भ. ५ अलंकृताशावयवः. ६ विस्तरत्. ७ समये. ८ अकलङ्कोऽकलङ्के.

स्ये, रञ्जितलोको लोकायते, प्राप्तप्रभः प्राभाकरे, प्रतिच्छन्दक-[1][2]च्छन्दसि, अनल्पविकल्पः कल्पज्ञाने,[3] शिक्षाक्षमः शिक्षायाम्, अ-कृतापशब्दः शब्दशास्त्रे, अभियुक्तो निरुक्ते, सज्ञो ज्योतिषि, त-त्त्ववेदी वेदान्ते, प्रसिद्धः सिद्धान्तेषु,[4] स्वतन्त्रस्तन्त्रीवाद्येषु,[5] पटुः प-टहे, अप्रतिमल्लो झल्लरीषु, निपुणः पणवेषु, प्रवीणो वेणुषु, चि-त्रकृच्चित्रविद्यायाम्, उद्दामः कामतन्त्रे, कुशलः शालिहोत्रे,[6] श्रेष्ठः काष्ठकर्मणि, सावलेपो लेप्ये, पण्डितः कोदण्डे, शौण्डः शारिषु,[7] गुणवान्[8] गणिते, बहुलो[9] बाहुयुद्धेषु,[10] चतुरश्चतुरङ्गद्यूतक्रीडायाम्[11] उपदेशका देश[12]भाषासु, अलौकिको लोकज्ञाने ॥ क ॥

किं बहुना ।

रसे रसायने ग्रन्थे शस्त्रे शास्त्रे कलास्वपि ।
नले न लेभिरे लोकाः प्रमाणं निपुणा अपि ॥ १४ ॥

[13]क्रमेण शैशवमतिक्रामतोऽस्य सेवकैरिवाङ्गावयवैरप्यनुवृत्तिः कृता ॥ ख ॥

तथाहि ।

श्रवणासक्तस्य लोचनद्वयमपि श्रवणसंगतिमकरोत् ॥ ग ॥

कारादिवर्णजन्मस्थानानां बोधिका शिक्षा ॥ अन्वयस्य प्रकाशकं निरुक्तम् ॥ अतीन्द्रि-यशुभाशुभकर्मणां प्रकाशकं ज्यौतिषम् ॥ क ॥

**रस इति** ॥ रसः पारदः । रसायनं जरामरणापहं औषधयोगः । ग्रन्थः काव्य-शास्त्रादिरचना । शस्त्रं खड्गादि । शास्त्रं व्याकरणतर्कादि । कला गीतनृत्यादयः । एतेषु निपुणा अपि सन्तो लोका नले राज्ञि प्रमाणमियत्तां न प्रापुः ॥ १४ ॥

**श्रवणेति** ॥ श्रवणे शास्त्राकर्णने आसक्तः । श्रवणसंगतिः कर्णसंगतिः ॥ ग ॥

---

१ प्रतिभः. २ छन्दःशास्त्रे. ३ कल्पजाते. ४ सिद्धान्ते. ५ वीणावेणुषु. ६ शालिहोत्रेषु, अमुद्रः सामुद्रिके. ७ शरेषु; शारेषु. ८ गुणिनि. ९ बहुगुणो. १० बाहुयुद्धे. ११ तुरङ्गमक्रीडा; तुरङ्गव्यूह-क्रीडा. १२ भाषासु. १३ क्रमेण च.

उन्नतस्वभावस्य नासावंशोऽप्युन्नतिं जगाम ॥ क ॥

वक्रोक्तिकुशलस्य केशकलापोऽपि वक्रतां भेजे ॥ ख ॥

शङ्खनिर्मलगुणस्य कण्ठोऽपि शङ्खाकारमधारयत् ॥ ग ॥

पृथुलमतेरंसकूटद्वयमपि पृथुलमभूत् ॥ घ ॥

प्रमाणवेदिनो[1] वक्षःस्थलमपि सुप्रमाणमजायत ॥ ङ ॥

मध्यस्थस्य तस्य रोमराजिरपि मध्ये[2] स्थिता शुशुभे ॥ च ॥

सुवृत्तस्य बाहूरुयुगलमपि सुवृत्तमभवत् ॥ छ ॥

गम्भीरप्रकृतेर्नाभिरपि गम्भीरा व्यराजत ॥ ज ॥

पल्लवसुकुमारहृदयस्य हस्त[3]चरणैरपि पल्लवसौकुमार्यमङ्गीकृतम् ॥ झ ॥

अथ[4] किं बहुना ।

सोष्णीषमूर्धा ध्वजचक्र[5]पाणि-
रूर्णाङ्कविस्तीर्णललाटपट्टः ।
सुस्निग्धमूर्तिः ककुदुन्नतांसः
कस्यैष न स्यान्नयनाभिरामः ॥ १५ ॥

अपि च ।

आस्यश्रीःसंनिभेन्दोः समदवृषककुद्बन्धुरः स्कन्धसंधिः
स्निग्धा रुक्कुन्तलानामनुहरति दृशोर्द्वन्द्वमिन्दीवरस्य ।

पृथुलेति ॥ अंसकूटेति कूटशब्दः शिखरार्थः ॥ घ ॥

प्रमाणेति ॥ प्रमाणं तर्कशास्त्रं मानं च ॥ ङ ॥

मध्येति ॥ मध्यस्थोऽकृतपक्षपातः । अन्यत्र मध्ये उदरे तिष्ठतीति ॥ च ॥

सुवृत्तेति ॥ वृत्तं शीलं वर्तुलं च ॥ छ ॥

गम्भीरेति ॥ गम्भीरप्रकृतिरलक्ष्यकोपप्रसादः । निम्ना च गम्भीरा ॥ ज ॥

सोष्णीषेति ॥ उष्णीषाकारं शारीरिकं लक्षणमुष्णीषम् ॥ ऊर्णा भ्रूमध्ये शुभरोमावर्तः ॥ १५ ॥

1 वादिनो. 2 मध्यस्था. 3 कर. 4 किं बहुना. 5 चिह्न.

स्थानं वक्षोऽपि लक्ष्म्याः, स्पृशति भुजयुगं जानुनी, [illegible]
जङ्घे, क्षामोऽवलग्नः, किमु निषधपतेः श्लाघनीयं न तस्य॥१६॥

अस्ति च तस्य नरपतिसूनोः समानशीलवयोविद्यालंकारकान्तिकलाप[1]परिपूर्णदेहः, शरीरमात्रद्वितीयोऽप्यद्वितीय[2]हृदयमेकं जीवितमपर उच्छ्वासः, सालङ्कायनसूनुः श्रुतशीलो नाम मन्त्री मित्रं[3] च ॥ क ॥

एकदा तु पूर्वदिग्वधूकुङ्कुमपङ्क[4]पल्लवितवदनायमाने निरुद्धान्धतमसे सौगन्धिकबन्धुनि बन्धूककुसुमारुणे वियति तरतीव तरुणतरे तरणिमण्डले, मण्डयति कुसुम्भकुसुमकेसरप्रकरायमाणे[5] गगनाङ्गणमम्भोजमुकुलनिद्रा[6]मुषि रोचिषां चये, चलिते च विचरितुमु[7]पवनतरुराजिकर्णोत्पले निद्राविरामविधुत[8]पक्षे पक्षिकुले, कृतप्राभातिककर्मणः सभाङ्गणमण्डप[9]मध्यवर्तिनो दत्तसेवावसरस्य राज्ञः प्रविष्टे मन्त्रिणि सालङ्कायने, प्रणामपर्यस्तकर्णोत्पलध[10]वलितसभाङ्गणे यथासनमुपविष्टे प्रस्तुतसेवालापरञ्जितराजनि राजन्यचक्रे, प्रक्रान्ते शास्त्रीयविनोदे, श्रुतशीलेन सममन्यैश्च[11] क्रीडासहायैरनुचरैरनुगम्यमानो नलः सेवासुखमनुभवितुमागतवान्॥

आगत्य च क्षितितलमिलन्मौलिमण्डलः प्रणम्य पितुः पादारविन्दद्वयमदूरदत्तमासनं[12] भेजे ॥ ख ॥

उपविष्टे च तस्मिन्ननभिवादनादुत्पन्नमन्युरीषत्कोपकम्पि[13]तकरपरामृष्टकूर्चाग्रिमग्रन्थिरग्रणीर्मन्त्रिमण्डलस्य भ्रूभङ्गभीषण-

अस्तीति ॥ अपर उच्छ्वास इति ॥ न परोऽस्मादित्यपर उत्कृष्टः ॥ क ॥

उपविष्ट इति ॥ आत्मनोऽप्रणामाद्विदितविनयाकौशलं नलं प्रीतिभाक् पैतृको म-

---

१ कलाकलाप. २ अद्वितीयम्. ३ नाम मित्रम्. ४ कुङ्कुम. ५ करायमाणे. ६ मुद्रा. ७ चरितुम्. ८ अवधूत. ९ सभामण्डप; सभामणिमण्डपः. १० मकरन्दशबलित; शबलित. ११ अन्यैरपि. १२ आसनम्; अदूरदत्तासनम्. १३ सकम्प.

अपिच ।

साप्यनेककलोपेता साप्यलंकारधारिणी ।
सापि हृद्यस्वरालापा किंत्वसाधारणा तव ॥ ४९ ॥

अपिच ।

संगीतका त्वदौत्सुक्यात्त्वां स्मरन्ती समूर्छना ॥
किं तु तस्यास्त्वयि स्वामिँल्लयभङ्गो न दृश्यते" ॥ ५० ॥

एवमुक्तवति किंनरेश्वरे किमप्यलीककोपकुटिललोलभ्रूवलया वलितकंधरमवलोक्य किंनरी वक्तुमारभत ॥ क ॥

"सुन्दरक, मा मैवं वादीः ॥ ख ॥

शुष्काङ्गी घनचार्वङ्ग्याः सुवाचः काकलीस्वरा ।
दमयन्त्याः कथं गीतिः सादृश्यमवगाहते ॥ ५१ ॥

**सापीति** ॥ कला विज्ञानकौशलम् । अलंकार आभरणम् । स्वरः शब्दः । आलापो मिथोभाषणम् । गीतिपक्षे "पताकेनावकृष्टिश्च विरलाङ्गुलिना च या । आवाप इति विज्ञेया कलाविद्भिस्तु सा कला" इत्यावापादयः सप्त कलाः । अलंकारा उपमारूपकादयः । स्वराः षड्जादयः सप्त । आलाप आलप्तिः । परं किं नु दमयन्ती असाधारणा अनन्यविषयत्वादेकाश्रया । गीतिस्तु साधारणा स्वरसाधारणा जातिसाधारणा चेति ॥ ४९ ॥

**संगीतेति** ॥ त्वय्यौत्सुक्यं त्वदौत्सुक्यं तस्माद्धेतोः । सम्यग् गीतं प्रख्यातिरस्याः । इति सर्वत्र त्वदुक्ता गीयत इति भावः । तथा त्वां स्मरन्ती सहमूर्छनया वर्तते इति समोहा ॥ गीतिस्तु संगतं गीतं स्वरगुणदूषणग्रामश्रुतियतिमूर्छनालक्षणं यस्याम् । तथा "स्वरः संतर्जितो यत्र रागत्वं प्रतिपद्यते । मूर्छनामिति तां प्राहुर्मुनयो ग्रामसंभवाम्" ॥ सा चैकविंशतिविधा ॥ यदुक्तम्—"सप्त स्वरास्त्रयो ग्रामा मूर्छनास्त्वेकविंशतिः" इति ॥ तथोक्तया सह समूर्छना । इत्येतावता दमयन्तीगीत्योः साम्यमुक्तम् । अधुना तु भेदं निरूपयति—किंत्विति ॥ लयस्तत्परता । द्रुतमध्यविलम्बितलक्षणश्च ॥ ५० ॥

**शुष्केति** ॥ शुष्कमवकृष्टमङ्गमवयवो यस्याः । कु ईषत् कलोऽस्यामिति (गौरादित्वान्ङीषि) काकली निषादसंज्ञः स्वरो यस्याः ॥ वैसादृश्यपक्षे शुष्कमनार्द्रम् । काकली श्लेष्मवैगुण्याद्द्विधाभूतः स्वरः ॥ ५१ ॥

अपि च ।

गीतेर्ग्रामाः किल द्वित्राः सा तु ग्रामसहस्रभाक् ।
कूटतानघना गीतिः कथं तस्याः समा भवेत् ॥ ५२ ॥

किं चान्यत् ।

ज्वरितेव बहुलङ्घनप्रयोगप्रकाशितमूर्छना बहुलकम्पा च । उन्मत्तेव बहुभाषा बहुताला च । वेश्येव बहुगा बहुढक्करागा च । अटवीव बहुककुभभेदा बहुलनिषादस्थानका च । गीतिरियम् ॥ क ॥

तदरमिदमुच्यताम् ।

वेदविद्योपमा देवी मनोहरपदक्रमा ।
उद्द्योतिता पुराणाङ्गमन्त्रब्राह्मणशिक्षया ॥ ५३ ॥

**गीतेरिति** ॥ षड्जमध्यमगान्धाराख्यो ग्रामाः । गान्धारस्य स्वर्गविषयत्वाद्द्वावेवेति द्वित्राः । ग्रामः खेटकं च । कूटतानाः पञ्चत्रिंशत् । तैर्घना ॥ दमयन्ती तु न कपटविस्तारबहुला ॥ ५२ ॥

**ज्वरित इत्यादि** ॥ लङ्घनमुद्ग्राहितादधिकोच्चारणम् । पक्षे लङ्घनं शोषणम् । अनशनमिति यावत् । प्रयोगे उच्चारणे प्रकाशिता मूर्छना उत्तरमन्द्रादिका यस्याम् । पक्षे प्रकृष्टा योगाः क्वाथादयः । मूर्छना मोहः । कम्पोऽङ्गकृतं स्वरकृतं च चलनम् ॥ **उन्मत्तेति** ॥ भैरवीप्रभृतयः षट्त्रिंशद्भाषाः । तालश्चच्चत्पुटादिः ॥ उन्मत्ता तु बहु भाषते तालिकाश्च दत्ते ॥ **वेश्येवेति** ॥ रागः श्रीरागादिः । तथा बहुलष्टक्कनामा रागो यस्याम् । वेश्या तु बहुषु रागोऽस्या इति बह्वासक्तिः । प्रभूतठक्करागामिनी च ॥ ठक्कशब्दोपलक्षिता क्रीडया कराहतिः ठक्करा । गमेः प्रात्यर्थाड्डः ॥ **अटवीति** ॥ ककुभो ध्वनिविशेषः । निषादः स्वरविशेषः । स्थानकं मन्द्रमध्यमतारलक्षणम् । अटवीपक्षे ककुभोऽर्जुनवृक्षः । निषादाः शबराः । स्थानकान्यालवालाः शिबिरसंनिवेशाश्च ॥ एवं ज्वरिताद्युपमानप्रतिपादितदोषा गीतिः कथंकारमिव दमयन्तीसमा ॥ क ॥

**वेदेति** ॥ पदक्रमः पदन्यासः । पुराणं जीर्णं वपुर्येषाम् । तथा मन्त्रप्रधानब्राह्मणानां पुरोधःप्रभृतीनां च शिक्षयोपदेशेनोद्द्योतिता ॥ वेदविद्या तु पदक्रमाभ्यामभिधीयते । पुराणानां मार्कण्डेयादीनाम् । अङ्गानां शिक्षाकल्पादीनाम् । मन्त्रब्राह्मणस्य ग्रन्थविशेषस्य शिक्षयाभ्यासेन भूष्यते ॥ अन्तःपुरे हि वृद्धा एवाधिक्रियन्ते । यदु-

1 किंबहुना.

"किं त्वियमेकपथा, सा तु दृष्टशतपथा" इत्येवमने[illegible]क्तो-
क्तिविशेषै[illegible] दमयन्तीं किंनरमिथुने[illegible]यां वि-
भावयति सुरकु[illegible] निशीथे[illegible]ति भूम-
भासि तमसि भुवनम्, अनन्तरमवसरपाठकः प[illegible]

> [illegible]रमणीयात्किंनर[illegible]गीता-
> [illegible]भवति निशीथो[1] नाथ नेत्राणि पश्य ।
> [illegible]कोकयोषाम्भोरुहाणां
> मिलतु कुलवधूनां सेवको लोक एषः ॥ ५४ ॥

अपि च ।

> शतगुणपरिपाट्या पर्यटन्नन्तराले
> कमलकुवलयानामर्धरात्रेऽपि[2] खिन्नः ।
> उपनदि दयितायाः क्वापि[3] शब्दं निशम्य
> भ्रमति पुलिनपृष्ठे चक्रवच्चक्रवाकः ॥ ५५ ॥

अथ यथाप्रियं प्रेषित[4]परिजनो राजा रजनिशेषमतिवाहयितु-
मनुरूपं निरूप्य किंनरमिथुनस्य शयनमासन्ननिद्रागृहे[5] हंसपि-
च्छच्छायाच्छप्रच्छदपटाच्छादित[6]हंसतूल[7]तल्पमभजत् ॥ ख ॥

तत्र च दमयन्त्यनुरक्तोऽयमितीर्ष्ययेवानायान्त्यां निद्रायां द्रो-

क्तम्-"आशीतिकाश्च पुरुषाः पञ्चाशत्काश्च योषितः । बुध्येरन्नवरोधानां शौचमागा-
रिकाश्च ये" ॥ ६३ ॥

**किंत्वियमिति** ॥ इयं दमयन्ती एकमार्गा । वेदविद्या तु दृष्टशतपथाख्यग्रन्था ।
भूयिष्ठा भूता अतिक्रान्ता, भूतभूयिष्ठा । आहिताग्न्यादित्वात् । निशीथे तमोऽतिश-
यान्[illegible]नम् । सुराणां समूहे च स्वभावात् ॥ क ॥

**तत्रेति** ॥ द्रोण्यां द्रुमास्तेषामन्तरालं द्रोणीद्रुमान्तरालम् मध्ये । निम्न[illegible]

१ निशीथे. २ प्यखिन्नः. ३ कोऽपि. ४ मोषित. ५ आसन्नं निद्रा. ६ पटपटिकाच्छादि.
७ तूलीतल्पतलमभजत्.

मविषमवनविभागा[illegible]कल्लोलजलनिधेरिव [illegible] [illegible]स्य कल[illegible]तोपिताचारुचार्वर्चितचन्द्रचूड-चरणचटुलखुरचारीप्रचारेणाडम्बरिततताण्डवस्य खण्डपरशोः पद-लीलामिवाभ्यस्यता स्फुरद्घुरघुरायमाणघोणाग्रस्खलत्स्थलीनवश-विगलितबहललालाजलप्लवेन वनभुवि फेनिलजलनिधिमिवाका-रयता जात्यतरतुरगसैन्येन परिवृतः पूर्वप्रस्थानस्थित्या प्रतस्थे॥क॥

स्थपुटस्थलीस्थितं स्थूलमेकमव्यग्रमग्रे राजा गजग्रामण्यम-वलोक्य पुष्कराक्षमभाषत ॥ ख ॥

“भद्र

सालानकमनालानमत्युन्नतमनुन्नतम् ।
दन्तवन्तमदन्तं च पश्यैनमगजं गजम् ॥ ५७ ॥

अयं हि मन्मथविलासेषु परं वैदग्ध्यमवलम्बते ।

तथाहि ।

मृदुकरपरिरम्भारम्भरोमाञ्चितायाः
सरसकिसलयाग्रग्रासशेषार्पणेन ।
मदमुकुलितचक्षुश्चाटुकारी करीन्द्रः
शिथिलयति रिरंसुः केलिकोपं प्रियायाः ॥ ५८ ॥

सालेति ॥ अलीनां समूह आलं तदेव प्रत्यायकत्वात्पटहस्तेन सह । मदविधुर-गजे भृङ्गाः समीपीभवन्ति । तेन च मत्तो ज्ञायत इति भावः । तथा अनालानं [illegible]त्वा-न्निर्गलस्तम्भम् । तथातीवोन्नतमुखम् । तथा नास्ति उन्नता प्रेरणा[illegible]ति स्वच्छ-न्दचरमित्यर्थः । यद्वा अनुन्नेत्यामन्त्रणम् । तमिति गजविशेषणम् । दन्तवन्तं दन्तु-रम् । [illegible] तृणादिकमभक्षन्तम् । अगजं गिरिजं गजं पश्येति [illegible] ॥ अथवा सालानकमदन्तम् । तथा अकमकुत्सितम् । सर्वलक्षणपरिपूर्णम् । [illegible] कुम्भः—” इत्यादिना वक्ष्यति । अत्र “किम्” क्षेपे । शेषं पूर्ववत् ॥ ५७ ॥

१ चारुचर्चाचित. २ जलाप्लवेन. ३ नास्ति.

अपिच। [illegible]

उपनयति करे करेणुकायाः किसलयभङ्गमनङ्गसंगताङ्गः।
स्पृशति च चलदक्षिपक्ष्मलेवं मुखमसरेण करेण रेणुदिग्धम्॥ ५९

अथवा विवेकपूर्वव्यवहारविचारेष्वमी मानुषेभ्यः स्तोकसेवावहीयन्ते॥ क॥

तथाहि।

श्रूयते पुरा किल नारायणनाभ्यम्भोरुहकुहरकुटीमधिशयानस्य वेदविद्यां निगदतो भगवतः पितामहस्य बृहद्रथन्तरविकीर्णभासनामानि सामानि गायतः सामस्तोभरसनिष्यन्दादुदपद्यन्तैरावतसुप्रतीककुमुदवामनाञ्जनप्रभृतयोऽष्टौ दिग्गजेन्द्राः॥ ख॥

तेभ्योऽभवन्भद्रमन्द्रमृगसंकीर्णजातयो गिरिचरनदीचरोभयचारिणः करिणः॥ ग॥

प्रसिद्धं चैतत्। "सामजा गजाः" इति॥ घ॥

केचित्पुनरन्यथा कथयन्ति

किल सकलसुरासुरकरपरिवर्त्यमानमन्दरमन्थानमथितदुग्धाम्भोनिधेरजनि जनितजगद्विस्मयो लक्ष्मीमृगाङ्कसुरभिसुरद्रुमधन्वन्तरिकौस्तुभोच्चैःश्रवसां सहभूः शशधरकरकान्तिरैरावतः। तत्प्रसूतिरियमशेषवनान्यलंकरोतीति॥ ङ॥

तदेष भद्रजातिर्भविष्यति।

तथाहि।

उच्चैःकुम्भः कपिशदशनो बन्धुरस्कन्धसंधिः

श्रूयत इति॥ सामस्तोभरसनिष्यन्दादिति। सामनि स्तोभ आसक्तिस्तस्माद्रसस्य स्वेदस्य निष्यन्दः स्रावस्तत इत्यर्थः। स्तोकरसपाठे तु रस आसक्तिः। निष्यन्दः स्वेदः॥ ख॥

---

१ मनुष्येभ्यः. २ कुटीर. ३ सुरभिसुरद्रुमधन्वन्तरिकौस्तुभोच्चैःश्रवःशशधरलक्ष्मीसहोदर ऐरावतः. ४ करोति.

स्निग्धालापश्रुतिजनमनोनिर्वृत्ति[illegible]

श्रूयते[illegible]परिमलस्पर्धिवानीरकोऽयं

[illegible] सान्द्रद्रुमनिरिततिमिरचारी [illegible] ॥ ६७ ॥

तन्मोक्ष्यतामयम्, अनुरागिणोर्दम्पत्योः क्रीडारसविघातः कुतो न श्रेयान्" इत्यभिधाय, हृतहृदयः, स्वैरं रममाणमृगमिथुनविलासैरुल्लासितपुलकः कुसुमितकाननानिलैः, उत्कम्प्यमानः, झरनिर्झरोपान्तपादपतलचलत्केलिकिलकेकिकेकारवैर्विनोद्यमानः समीपचरसेवकसुभाषितैश्च, सममसमं च, निम्नगाश्रमनिम्नगात्रं च, ग्रावविषममग्रावविषमं च, सश्वापदमश्वापदं च, सपादपमपादपं च, विन्ध्यस्कन्धमुल्लङ्घ्य, "देव, विलोक्यतामिह विषमविषाणि पन्नगकुलानि द्रोणीगहनं च, इह शरासनकरम्बा-

तदिति ॥ उच्चैः कुम्भ इत्याद्यभिधाय तेनैव करिणा हृतहृदयो मृगमिथुनविलासादिभिः पुलकाद्युपेत ईदृशं विन्ध्यमतिक्रम्य "देव, वीक्ष्यताम् इह विन्ध्यस्कन्धे इदमिदमिति वनप्रदेशान्दर्शयतः पुष्कराक्षस्य वक्रोक्तिभावयन्नतिक्रान्तशिखरपरम्परः सन्नमयात् ॥ केलये किलतीति केलिकिलः ("इगुपध" इति कः) क्रीडापात्रम् । केलिकिलानां केकानुकारप्रवृत्तानां केकिनां च केकारवैर्विनोद्यमानः ॥ सह [illegible] [illegible] समं सभीकम् । असमं विषमम् । न समोऽस्येति कृत्वा उत्कृष्टं वा । निम्नगा नदी आपत इति कः । तथा अनिम्नमुच्चं गात्रं मूर्तिर्यस्य । ग्रावभिर्दृषद्भिर्विषमम् । अग्रे अग्रावविषमं समम् । अवेति नञर्थे ॥ श्वापदं हिंस्रपशुः । अश्वानामपदमभूमिम् । समनिर्जलो हि देशोऽश्वीयः । अयं च ग्रावविषमो निम्नगाधारश्च ॥ सह पादपैर्वृक्षैः । [illegible] अपादान् गूढपदः पातीत्यपादपम् । [illegible] हि सर्पादिभ्यस्तुर्यः । अथवा [illegible] संवृतां पादान् न पातीत्यपादपम् ॥ इहविषेति ॥ विषमं विषं येषु पन्नगकुलेषु । द्रोणीगहनेषु तु विषमा विषाणिनो दन्तिनः शृङ्गिणो वा सम्बरादयो यत्र ॥ इह शरेति ॥ पुरेण

---

१ तत्सोढ्यतामयम्. २ हृष्टहृदयः; हृतहृदयः. ३ रममाणपामरमिथुन. ४ उल्लासित. ५ केकिकेकारवैः. ६ सेवित. ७ ग्रावविषममप्यग्राव.

णि [illegible] च, इह बहुसुखानि [illegible] नि रत्नाकरस्थलं च, इह सुमधुराणि फलानि कीचकवनानि च, इहामोदितविश्वककुभि कुसुमानि [illegible] च, इह [illegible] नि [illegible] मुनिमण्डलं च" इति विविधवनप्रदेशान्दर्शयतः पुष्कराक्षस्य विचित्रवचनोक्तीर्भावयन् क्रमेणातिक्रम्य शिखरमाकम्पं परैरसह्यः सह्याचलमवततार ॥ क ॥

रमणीयतया स्निग्धतया च पुनः परिवर्तितमुखो विलोक्य विन्ध्यदक्षिणमेखलाशिखरश्रेणीपादपान् पुष्कराक्षमभाषत ॥ ख ॥

"भद्र, दुस्त्यजाः खल्वमी विन्ध्यतटीतरवः ॥ ग ॥

तथाहि ।

आवासाः कुसुमायुधस्य शबरीसङ्केतलीलागृहाः
पुष्पामोदमिलन्मधुव्रतवधूझङ्काररुद्धाध्वगाः ।
सुस्निग्धाः प्रियबान्धवा इव दृशो दूरीभवन्त्यभिरा-

मुञ्जेन असनेन बीजकवृक्षेण च करम्बाणि शबलानि । पुलिन्दवृन्दं तु शरासनं धनुः करे यस्य । तथा बाणाः सन्त्यस्येति बाणि सशरम् ॥ इह बेति ॥ बहु सुखं येषां तानि बहुसुखानि । स्थलं तु बहु विपुलम् । तथा सुष्ठु खानिराकरो यत्र । बहुशब्दो वैपुल्येऽपि ॥ इह सुमेति ॥ सुष्ठु मधुराणि । वनं तु सुष्ठु मधु यत्र तत्सुमधु। तथा रणन्त्यवश्यं राणि। सच्छिद्रा हि वंशा वायुवशाद्रणन्तीति ॥ इहामविति ॥ आमोदिताः सुरभिता विश्वाः सर्वाः ककुभो दिशो यैः । तीरं तु आमोदिता हर्षिता वयःपक्षिणः श्वकाः शुनः प्रतिकृतयो वृकाः कुम्भिनश्च गजा यत्र । आमोदो हर्षेऽपि । प्रद्विश्वप्रकाशः—"आमोदो गन्धहर्षयोः" । यदा तु विश्वा शुण्ठी कुम्भीच वल्लीविशेषः । तदा बहुव्रीहौ "शेषात्—" इति कब्दुर्वारः । सादृश्यवृत्तेः शुनः । संज्ञाप्रतिकृत्योः कन् ॥ इह [illegible] ॥ सती शोभना प्रभा कान्तिस्तया वन्ध्यानि रहितान्यरण्यानि । मुनिमण्डलं तु सत्प्रभावम् ॥ तथाध्यानमस्यास्तीति ध्यानि ॥ क ॥

---

१ परंपराः. २ पुनः पुनः. ३ श्रेणी. ४ दु; क्ले. ५ सुस्निग्धमिय.

स्कन्धैस्ते न वहन्ति हन्त तदपि विन्ध्याचलस्य द्रुमाः ॥ ६१ ॥

अपि च ।

भ्राम्यद्भृङ्गभरावनम्रकुसुमश्च्योतन्मधूद्गन्धिषु

च्छायावत्सु[1] तलेषु पान्थनिचया विश्रम्य गेहेष्विव ।

निर्यन्निर्झरवारिवारिततृषस्तृप्यन्ति येषां फलै-

स्ते नन्दन्तु फलन्तु यान्तु च परामभ्युन्नतिं पादपाः ॥ ६२ ॥

अपिच ।

यत्र न फलितास्तरवो विकसित[2]सरसीरुहाः सरस्यो वा ।

न च सज्जनाः स देशो गच्छतु निधनं श्मशानसमः ॥ ६३ ॥

तत्कथय कदा पुनरिमां विन्ध्यवनवीथीं विचित्रपत्रलकुचां दमयन्तीमिव[3] निर्विघ्नमवलोकयिष्यामः ॥ क ॥

तथाहि ।

पीनोन्नमद्घनपयोधरभारभुग्न-

मध्यप्रदेशरुचिमल्लवलीलतायाः ।

उत्कण्ठितोऽस्मि चलदेणदृशः प्रियाया-

स्तस्याश्च पर्वतभुवो वनवीथिकायाः ॥ ६४ ॥

यत्र नेति ॥ देशश्मशानयोः समतायामरतिजनकत्वं हेतुः ॥ ६३ ॥

तत्कथेति ॥ विचित्रपत्रा लकुचास्तरवो यस्याम् । दमयन्ती तु विविधपत्रवल्ली-युक्तस्तनी । पत्रं लात इति के पत्रलौ ॥ क ॥

पीनोन्नेति ॥ कठिनस्तनभरेण भुग्ने नम्रे उदरे रुचिं मल्लन्ते धारयन्तीति इत्यणि तथोक्ता वल्य एव लता यस्याः । वली उदररेखा । तथा चलतामेणानामिव दृशौ यस्याः । वनवीथीपक्षे पयोधरो मेघः । रुचिमती तेजस्विनी लवली नाम्नी लता । तथा चलदेणानां दृक् दर्शनं यस्याम् ॥ ६४ ॥

---

1 छायावद्धतलेषु. 2 विकासिसरसी. 3 दमयन्तिच.

अपिच।

सानूनां सानूनां विलोक्य रमणीयतां च सानूनाम्।
सालवने सालवने विहरिष्यति सह मयाऽत्र कदा॥ ६५॥

सखे सखेदा इव वयम्, तत्कथय कियद्दूरेऽद्यापि स विदर्भविषयः, यत्र ब्रह्माण्डशुक्तिसंपुटमध्यमुक्ताफलगुलिकया तयालंकृतं तत्कुण्डिनं नगरम्" इत्यभिदधाने निषधनाथे तैस्तैरालापैरनुवर्तितोक्तिः पुष्कराक्षोऽप्यभाषत॥ क॥

"देव, प्राप्ता ननु वयम्॥ ख॥

इदं हि।

वीरपुरुषं तदेतद्वरदातटनामकं महाराष्ट्रम्।
दक्षिणसरस्वती सा वहति विदर्भा नदी यत्र॥ ६६॥

इहाकरभया सिंहलद्वीपभुवा सदृशी, बहुदया त्यागिजनतया तुल्या, समृद्धनया भूनिखातकृपणजननिक्षेपकुम्भिकया समाना, प्रजा॥ ग॥

**सानूनामिति**॥ सानूनां तटानां संबन्धिनो ये सानवो मार्गास्तेषां रमणीयतामनूनां परिपूर्णां विलोक्य अलवनेन सह यत् सालानां सर्जतरूणां वनं तस्मिन्मया समं कदा सा विहरिष्यति। अत्र प्राच्यः सानुशब्दस्तटार्थोऽन्यश्चाध्वार्थः॥ यद्विश्वः—"सानुः शृङ्गे बुधे मार्गे पत्रायां पल्लवे वने"॥ यदि वा "णू स्तवने" आनवनमानुः प्रशंसा तया सह वर्तन्त इति सानूनि तेषां स्तुत्यानामित्यर्थः॥ ६५॥

**सखे इति**॥ ब्रह्माण्डमेव शुक्तिसंपुटः। सा च तन्मध्ये मुक्ताफलगुलिका साधुमुक्ताफलम् गुलिकाकारत्वात्। एतावता स्थूलवृत्तत्वम्॥ क॥

**इहेति**॥ न कराद्राजदेयांशाद्भयं यस्यां साऽकरभया। भुवा तु न करभा यस्यामिति करभरहितया॥ तथा बह्वी दया यस्यां सा बहुदया। त्यागिनां जनतया तु बहु ददातीति बहुदा तया बहुदया॥ जनानां समूहो जनता। "ग्रामजन-" इति

---

१ हि. २ वैदर्भ. ३ समा प्रजा.

इह समकरन्दानि कमलवनानि राजराजन्यचक्रं च, इह बहुधामानि नगराणि लोकहृदयं च, इह सारम्भाणि कृषाणकुलानि दशरूपकप्रेक्षणं च, इह बहुकृपाणि जनमनांसि प्रजापालबलं च, इह महाविप्राणि ग्रामपुरपत्तनानि मेषगोष्ठं च ॥ क ॥

इयं च गगनवीथीव पूर्वोत्तराफल्गुनीराशिवायूपयुक्ता ब्राह्मणाग्रहारभूमिः ॥ ख ॥

इतश्च ।

आरुह्यैताः शिखरिसदृशान्ग्राममध्योच्चकूटा-
न्न्योन्यांसप्रणिहितभुजाः संगताः कौतुकेन ॥
प्रेक्षावेशादविचलदृशो योषितः पामराणां
पश्यन्त्यस्त्वां निभृततनवो लेख्यलीलां वहन्ति ॥ ६७ ॥

समूहे तल् ॥ समृद्धो नयो यस्यां सा समृद्धनया । कुम्भिकया तु समृत् मृत्तिकोपेतं धनं यस्यां तया समृद्धनया ॥ ग ॥

इहेति ॥ सह मकरन्देन वनानि । राजन्यचक्रं तु समः करो राजांशो यस्य । तथा दानमस्यास्तीति दानि ॥ इह येति ॥ बहूनि धामानि गृहाणि येषु । हृदयं च बहुधा अनेकधा मानोऽस्यास्तीति मानि ॥ इह सेति ॥ सह आरम्भैरुपक्रमैः कुलानि । प्रेक्षणकं तु सारमुत्कृष्टम् । तथा भाणो रूपकविशेषः सोऽस्यास्तीति भाणि ॥ यदाह धनिकः– "भाणस्तु धूर्तचरितं कृतं स्वेन परेण वा । यत्रोपवर्णयेदेको निपुणः पण्डितो विटः" ॥ इह बेति ॥ बह्वी कृपा येषु तानि । बलं च बहु । तथा कृपाणः खड्गोऽस्यास्तीति ॥ इह मेति ॥ महान्तो विप्रा येषु । गोष्ठं तु महान्तोऽवयो मेण्ढास्त एव प्राणिनो बलवन्तो यत्र ॥ क ॥

इयं चेति ॥ पूर्वस्यामुत्तरस्यां चाफल्गु सारमुत्कृष्टं यस्याम् । तथा शिवा कल्याणी । तथा यूपैर्यज्ञकीलैर्युक्ता । गगनवीथी तु पूर्वा उत्तराः फल्गुन्यो राशयो मेषाद्या वायुः पवनस्तैरुपयुक्तोपयोगीकृता ॥ ख ॥

आरुह्येति ॥ शिखरी गिरिः । कूटा अवकरोत्कराः । प्रेक्षायामवलोकने आवेश आग्रहः । पामराः प्राकृतजनाः ॥ ६७ ॥

१ राजन्यचक्रं च. २ रूपा.

किं चान्यत्।

नृप चलसि यथा यथा त्वमस्मि-
न्नपि वदनानि तथा तथा चलन्ति[1]।
तरलितनयनानि पामरीणां
पवनविनर्तित[2]पङ्कजोपमानि ॥ ६८ ॥

अपिच।

उत्कम्पाद्गलितांशुकेषु रभसादत्यन्तमुच्छ्वासिषु
प्रोत्तुङ्गस्तनमण्डलेषु विलुठद्गुञ्जावलीदामसु।
आसां स्वेदिषु दृश्यते मृगदृशां संक्रान्तबिम्बो भवा-
नाश्लिष्यन्निव गोपिकाः कृतबहुप्राकाम्यरूपो हरिः ॥ ६९॥

अहो नु खल्वाश्चर्यमिदमेतासां[3] तथाविधनेपथ्यनिरपेक्षाप्यु-
न्मादयति[4] यूनां मनो युवतीनां[5] यौवनश्रीः॥ क ॥

तथा हि।

माल्यं मूर्धनि कर्णिकारकलिका[6]ः पिष्टातकं चन्दनं
मुक्तादाम गले[7] च काचमणयो लाक्षामयाः कंकणाः॥
रागोऽङ्गेषु हरिद्रया नयनयोरत्युल्बणं कज्जलं
वेषोऽयं विरसस्तथापि हृदयं ग्राम्या हरन्ति स्त्रियः॥७०॥

उत्कम्पेति ॥ भ्रष्टांशुकत्वं स्वेदित्वं च स्तनमण्डलस्य निरावरणत्वेन नृपप्रति-
बिम्बस्य संक्रान्तौ हेतुः। प्राकाम्यं महासिद्धिविशेषः। प्राकाम्येण रूपाणि प्राकाम्य-
रूपाणि। कृतानि बहूनि प्राकाम्यरूपाणि येन ॥ ६९ ॥

अहो न्विति ॥ तथाविधमुदारं हारकुण्डलादिरूपं नेपथ्यम् ॥ क ॥

माल्यमिति ॥ हरिद्रा तण्डुलचूर्णम्। पिष्टातकं विलेपनम् ॥ ७० ॥

---

1 वलन्ति. २ विनर्तन. ३ एतेषां. ४ कुत्रचिन्नास्ति. ५ कुत्रचिन्नास्ति. ६ कलितं; कलिलं.
७ पदे.

इतश्च ।

कन्दलितकन्दविशेषाः कर्कशकर्कटिका विशालकालिङ्गाः कूष्माण्डमण्डितमण्डपाः सुवृत्तवृन्ताकाः सुहस्तितहस्तिकर्णपुनर्नवाः स्थूलमूलकाः पिण्डितपण्डालवो वास्तूकवास्तुभूतभूतलाः संजीवितजीवन्तिकाः सर्षपराजिकाराजिराजिताः सरित्सारिणीसारिवारिसेचनसुकुमारपल्लवितविविधशाकाः शाकवाटिकाः॥ क ॥

इतश्च ।

विकसन्मुचुकुन्दानन्दिनो मकरन्दस्यन्दिसुन्दरसिन्दुवाराः पामरीसंकेतनिकेतकेतकीवनाः कम्राम्रातकाः कुड्मलितकङ्कोलफलाः कोरकितकुरण्टकाः पल्लवितवल्लीकाः फुल्लन्मल्लिकोल्लासिनः सुजातजातयो विचित्रशतपत्रिकास्ताण्डवितपाण्डुपिण्डितागुरुकरवीरवीरुधो दृश्यमानसर्वर्तुपुष्पाः पुष्पायुधावासा आरामाः ॥ख

इतश्च ।

नातिदूरे दक्षिणदिशि दृशं निवेशयतु देवः ॥ ग ॥

एतास्ताः परिपक्वशालिकलमाः सुस्वादुदीर्घेक्षवो
वप्रप्रान्तहरित्तृणस्थलचलत्पीनाङ्गगोमण्डलाः ।
दृश्यन्ते पुरतः सरोरुहवनभ्राजिष्णुनीराशयाः
प्रान्तोन्नादिविचित्रपत्रिनिचयाः सस्यस्थलीभूमयः ॥७१॥

कन्दलितेति ॥ शाकवाटिकाः । सुहस्तितेति । हस्तः कन्दलोद्भेदः संजातोस्येऽति ॥ तारकादित्वादितच् ॥ हस्तिकर्णः पुनर्नवा च वल्लीभेदौ । वास्तूकेन शाकविशेषेण वस्तुभूतं गणनार्हं भूतलं यासु । राजिकानां राजसर्षपाणां राज्या राजिता ॥ क ॥
एता इति ॥ विचित्रपत्रिणो विविधपक्षिणः ॥ ७१ ॥

---

१ वस्तु. २ शरपत्रिकाः. ३ पिण्डीतगरकर. ४ पुष्पागमाः; पुष्पारामाः. ५ नीराश्रयाः.

अपि च ।

स्वःसौन्दर्यविडम्बि कुण्डिनमिदं सैषा विदर्भा नदी
सा चेयं वरदा स चायमनयोः पुण्याम्भसोः संगमः ।
अस्यैवोन्मदहंसहारिणि तटे सेनास्थितिः कल्प्यतां
यस्मिन्मत्तकरीन्द्रकुम्भकषणक्रीडासहाः पादपाः ॥ ७२ ॥

एवमनेकधा दर्शनीयप्रदेशप्रकाशनव्याजेन विनोदलीलां पल्लवयति पुष्कराक्षे, प्राप्ताः कुण्डिनपुरम्' इत्युच्छ्वसितहृदयो[3] निषधेश्वरः परमपरितोषात्पारितोषिकप्रदानपूर्वमिदमवादीत् ॥ क ॥

"भद्र, भवतः सौकुमार्यमाधुर्यमधुविश्रम्भसंदर्भितभङ्गश्लेषगभीभिर्गीर्भि[4]राक्षिप्तमनसामस्माकमविदितखेद[5] इव, अदृष्टसमविषमविभाग इव, अनुत्पादितस्वेदलव इव, अर्धगव्यूतिमात्रशेषो[6]ऽतिक्रान्तः क्रीडाविहारभूमिसमो महानपि मार्गः । समुचितश्चायं सेनानिवेशस्य सरित्संगमोपकण्ठवनविभागः ॥ ख ॥

तथा हि ।

इह भवतु निवासः सैनिकानामिहापि
श्रमतरलतुरंगग्रासयोग्या तृणाली ।
इह हि कवलयन्तः पल्लवान्वारणेन्द्रा
विदधतु तरुखण्डे गण्डकण्डूयनानि ॥ ७३ ॥

इतश्चात्यन्तमनोहरतयास्माकमासनयोग्या सरित्संगमोत्सङ्गभूमयः ॥ ग ॥

तथा हि ।

अपसृताम्बुतरङ्गितसैकता निचुलमण्डपनृत्तशिखण्डिकाः ।
कुररसारसहंसनिषेविताः पुलकयन्ति न कं पुलिनश्रियः ७४"

---

१ इतोऽपि; कुत्रतु नांस्त्येव. २ कथ्यतां. ३ आश्वसितहृदयो. ४ रुक्तिभि. ५ खेदेति नास्ति. ६ मात्रावशेषः.

इत्यभिधाय "भद्र, यथाक्रममकृतान्योन्यसंबाधकलहम्, अनुपद्रुततीर्थायतनम्, अलुण्ठितासन्नोद्यानम्, अच्छिन्नचैत्यद्रुमम्, अविच्छिन्नकमलवनं निवेशय सेनाम्" इति सेनापतिमादिदेश ॥क॥

सोऽपि यथादिष्टमनुतिष्ठन्निदमवादीत् ॥ ख ॥

"भजत बलसमूहाः खर्वदूर्वास्थलानि
स्थविरशुकविशीर्यत्पक्षपिच्छच्छवीनि ।
उपनदि मृदुवीचीवायुनाऽन्दोलितानां
कुसुमितलतिकानामन्तरालेष्वमूनि ॥ ७५ ॥

अपिच ।

स्मरविहरणवेदीं षट्पदापानशालां
तटमनु वनमालां सस्मया मास्म भाङ्क्षुः ॥
कमलवनविहारानन्तरं यत्र तैस्तै-
र्मदनमदविनोदैरासते राजहंसाः ॥ ७६ ॥

अपिच ।

सुरसदननिवासं सैनिका मास्म कुर्व-
न्सरिति मुनिकुटीनां भङ्गमुल्लुण्ठनं वा ।
इहं निषधनृपाज्ञा तस्य यः क्वापि कोऽपि
कुसुमुषि तरुखण्डे खण्डनं वा करोति" ॥ ७७ ॥

अच्छिन्नचैत्यद्रुमेति ॥ चैत्या ग्रामप्रदेशप्रसिद्धवृक्षाः ॥क॥

भजतेति ॥ यद्यपि पक्षपिच्छयोरभिधानकृता न भेदः प्रत्यपादि । तथापि महदेवान्तरम् । यतः पक्षशब्देन पक्षती एव । पिच्छशब्देन तदंशोऽभिधीयते ॥ ७५ ॥

स्मरेति ॥ तटमन्विति । तटं लक्ष्यीकृत्य । सस्मयाः सगर्वाः सन्तो भवन्तो वनमालां मा स्म भाङ्क्षुः । अन्यत्सकलं भङ्गनिषेधकारणम् । आसते इति बहुवचनान्तम् ॥ ७६ ॥

---

१ मलुठित. २ मखण्डितक. ३ विजीर्य; विकीर्य. ४ इति.

एवमनुशासति बलानि बहूनि बहुधा बाहुके, तत्क्षणादुत्त-म्भितैः प्रेङ्खत्पताकापटपल्लवविराजितैः प्रयाणयोग्ययन्त्रचित्रशा-लागृहैः संचारिणि गन्धर्वनगर इव रमणीये, हरिततोरणैरुड्डीन-शुकावलीमय इव, गैरिकारक्तोन्नमितपटकुटीभिरुत्फुल्लकिंशुकमय इव, श्वेतांशुकमण्डपैश्च ताण्डवितबृहत्पुण्डरीकखण्डमय इव, जा-ते सारत्संगमोत्सङ्गसङ्गिनि शिबिरसंनिवेशे, क्रमेणाक्रान्तसकल-दिङ्मुखेषु निषधेश्वरागमनवार्तानिवेदनदूतेष्विव विदर्भराजधा-नीधामनिर्गतेषु बहलसैन्यधूलिपटलेषु, रसति विपक्षक्षितिपालक-र्णपुटीकटुनि नवजलधरध्वनितगम्भीरे तत्कालप्रहतशङ्खसंखप्रया-णझल्लरीझांकृते, स्वयंवरायातसमस्तराजन्यचक्रकर्णकर्तरीषु पठ्य-मानासु सानन्दवन्दारुबन्दिवृन्दारकवृन्देनोच्चैर्नलनाममालासु क्ष-णादेवोत्तम्भितशातकुम्भस्तम्भभवने मृदुमसृणास्तरणभाजि जा-त्यवैदूर्यपर्यन्तपर्यङ्किकायां सुखनिषण्णे राजनि, सुस्थिते च परि-जने, नातिदूरवर्तिनि कुण्डिने दण्डपासिकस्योच्चैर्वागुदतिष्ठत्॥क॥

“सिच्यन्तां राजमार्गाः कलशमुखगलच्चन्दनाम्बुच्छटाभिः
स्तम्भाः प्रेङ्खत्पताकाः कुसुमपरिकरास्तोरणाङ्काः क्रियन्ताम् ॥
स्थाप्यन्तां पूर्णकुम्भाः प्रतिनगरगृहं प्राङ्गणे धान्यमिश्रैः
सिद्धार्थैः स्वस्तिकालीर्लिखत नरपतिर्नैषधः प्राप्त एषः ॥ ७८ ॥

अपिच ।

सत्कांश्चयश्चन्दनार्द्रस्तनकलशयुगामुक्तमुक्तावलीकाः
पात्राण्यादाय दूर्वादलदधिकुसुमोन्मिश्रसिद्धार्थभाञ्जि ।

एवमिति ॥ वन्दारावित्यत्र वदिः स्तुत्यर्थः ॥

१ खण्डमण्डप इव. २ वेदनदूतेष्विव; विनोददूषितेष्विव. ३ विरस. ४ शात. ५ स्तम्भेति नास्ति. ६ दण्डवासि. ७ नैषधेऽप्येष एषः. ८ सत्कान्त्यः.

सोत्कंता हंसपिच्छच्छविवसनभृतो वर्तिताश्चर्यचर्या
नार्यो निर्यान्तु तूर्यध्वनिलयललितं गीतमुच्चारयन्त्यः ॥ ७९ ॥

अपिच ।

अपि भवत कृतार्थाः पौरनार्यश्चिरेण
व्रजतु निषधनाथश्चक्षुषां गोचरं वः ।
ध्रुवमयमवतीर्णः स्वर्गलोकादनङ्गो
हरचरणसरोजद्वन्द्वलब्धप्रसादः ॥ ८० ॥

॥ इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां षष्ठ उच्छ्वासः ॥ ६ ॥

सत्कान्त्येति ॥ आमुक्तं योजितम् ॥ ७९ ॥

इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥

इति श्रीचण्डपालविरचिते दमयन्तीविवरणे षष्ठ उच्छ्वासः समाप्तः ॥

---

## सप्तम उच्छ्वासः ।

एवमविश्रान्तमतितारस्वरेण पुरः पौरपुरंध्रिमण्डलान्युद्दण्डयतो दण्डपासिकस्य कलकलमाकर्णयत्यास्थानस्थिते राजनि, प्रविश्य प्रणामप्रेङ्खोलितगलकन्दलावलम्बितजाम्बूनदस्थूलशृङ्खलास्फालितवक्षःस्थलः स्थविरवयाः सुवेषः प्रतीहारः सविनयमुक्तवान् ॥ क ॥

एवमिति ॥ उद्दण्डयन्तो गाढमुत्साहयन्तः । दण्डपाशिकस्तलारः । दण्ड-

1 गोचरे च. २ सकलविबुधमनोहारिण्यां. ३ दण्डवासि. ४ क्वचिन्नास्ति.

"देव, धृतमाङ्गल्यकल्पवेषाः पुष्पफलाक्षतपूर्णस्वर्णपात्रपाणयः पुरः[3] स्थिता अधीयाना ब्राह्मणाः कुण्डिनपुरपौराः पुरंध्रयश्च देवदर्शनार्थितया द्वारि सेवावसरमनुपालयन्ति ॥ क ॥

कथयन्ति चैवमदूरे विदर्भेश्वरोऽपि देवं द्रष्टुमायाति ॥ ख ॥

लग्न इव श्रूयते च शङ्खस्वनविदर्भितो विदर्भोपकण्ठे पठद्वन्दिवृन्दकोलाहलः ॥ ग ॥

तदादिशतु देवो यथाकर्तव्यम्" इत्यभिधाय स्थिते तस्मिन् "भद्रभूते, त्वरितं प्रवेशय विदर्भाधिपस्य परिजनं स्वयमपि तदर्धपथमनुसर" इति नलो दौवारिकमादिदेश ॥ घ ॥

सोऽपि "यथाज्ञापयति देवः" इत्यभिधाय यथादिष्टमकरोत्॥ङ॥

अनन्तरमनतिचिरादितस्ततो दोधूयमानचारुचामरकलापपवनेनर्तितकर्णकुवलयः, वल्गुवल्गनोल्लुलनलङ्घनलास्यलीलापदैः पथि प्लवमानमिव तरलतुरंगमधिरूढः, कनककलशशिखरैरेकदेशस्फुरितविद्युत्स्तबकैरकाण्डाडम्बरितमेघमण्डलैरिव मायूरातपत्रखण्डैराच्छादितगगनान्तरालः, शस्त्रोद्वहनकिणाङ्कितकठोरकण्ठोपकण्ठैः कठिनप्रकोष्ठलुठल्लोहवलयैरूर्ध्वबद्धोद्भटजूटकैरलंक-

पाशोऽस्त्यस्येति। "अत इनिठनौ" इति ठन्। जाम्बूनदस्य कनकस्य स्थूला शृङ्खला आभरणविशेषः ॥ क ॥

**देवेति** ॥ धृतो माङ्गल्ये कल्पो दक्षो वेषो मण्डनं यैः ॥ क ॥

**तदिति** ॥ भद्रभूतिरिति द्वाःस्थस्य नाम। तस्य चामन्त्रणम् ॥ ख ॥

**अनन्तरमिति** ॥ वल्गु यद्वल्गनं विक्रममाणता। उल्लुलनमुच्चैर्विलसनम्। लङ्घनं फाला। लास्यं नृत्यभूमिः। तेषु लीलापदैः प्लवमानं तरन्तमिव। आसनस्थैर्येणानुद्धातसुखत्वात्। मायूरातपत्रसमूहानां मेघमण्डलानि, सौवर्णकलशानां च विद्युत्ततय उपमानम् ॥ **कठिनेति** ॥ राजपुत्रा हि प्रकोष्ठे मणिकूर्परान्तरे दार्ढ्याय लोहवलयानि

१ धृतमङ्गल्यवेषाः २ स्वर्णेति क्वचिन्नास्ति. ३ पुरःस्थिताधीयानब्राह्मणाः. ४ इति. ५ पवनानर्ति. ६ तरलेति क्वचिन्न. तरंग. ७ शिखरैकदेश. ८ स्तोम. ९ लोहवहले. १० रातङ्क.

करालमौलिभिरर्धोरुकपरिधानैर्नि[1]शातकुन्तपाणिभिरभितस्त्वरित-पातिभिः पत्तिभिरनुगम्यमानः, मनाङ्मृदुमृदङ्गध्वनिकरम्बिते को-मलकांस्यतालशालिनि वांशिकवाद्यमानवंशनिस्वने दत्तकर्णः, क-र्णिकारगौराङ्गोऽङ्गणस्य नातिदूरेऽप्यदृश्यत भीमभूमिपालः ॥क॥

ततश्च चामरग्राहिणीहस्तपल्लवमवलम्बमानः सहेलमुत्थाय प्रथममुत्थितेन संभ्रमवशावलिगतवक्षःस्थला[2]वलम्बितकुसुमदा-म्ना विसर्पिकर्पूरकुङ्कुममिलन्मृगमदामोदेन त्वरितसंपातपतत्पट-वासपांसुना सामन्तचक्रेण परिकरितः कतिपयपदानि निषधेश्व-रस्तदभिमुखमगात् ॥ ख ॥

सोऽपि सत्वरोपसृतस्य ताम्बूल[4]प्रसेविकावाहिनः पुरुषस्य स्क-न्धमवष्टभ्य दूरादेव तुरंग[5]पृष्ठादवातरत् ॥ ग ॥

एवमन्योन्यनयनसंपातस्मिताननौ समकालमीषन्नमितमौलि-मण्डलौ समसमयप्रसारितभुजौ सरभसमाश्लेषवशविशीर्यमाण-हारावलीगलन्मुक्ताफल[6]च्छलेनाङ्गेष्वमान्तमिव प्रथमप्रेमामृतनि-ष्यन्दिबिन्दुबिसरमुद्गिरन्तावन्योन्यमाशिश्लिषतुः ॥ घ ॥

तथाविधे च व्यतिकरे, [8]प्रथमे प्रेक्षकाणां दक्षिणोत्तरदिक्पाल-योर्धर्मराजधनदयोरिव समागमे महान्नयनोत्सवो हर्षोत्कर्षकलक-लश्च ॥ ङ ॥

धारयन्ति । जूटकः केशबन्धविशेषः । अलकाः कुटिलाः करालाः सटालत्वाद्रौद्रा मौ-लयः संयतकेशा येषाम् । अर्धे ऊरू प्रमाणमस्य तदर्धोरुकम् । येन वाससा कटीप्र-भृति अर्धोरुपर्यन्तमाच्छाद्यते ॥ क ॥

**ततश्चेति** ॥ पटवासो वासःसुरभीकरणद्रव्यम् । परिकरितः परिवारितः ॥ ख ॥

**सोऽपीति** ॥ चर्मनिर्मितं पर्णपूगाद्यास्पदं प्रसेविका स्थगितेति ख्यातिः ॥ ग ॥

---

१ निखात. २ कुत्रचित्तकाररहितम्. ३ कुत्रचित्तकारसहितम् ४ स्थगिका. ५ कुत्रचिन्मकार-सहितम्. ६ वली; कली. ७ प्रसर; क्वचिन्नास्त्येव ८ प्रथमप्रेक्ष.

तदनु पुनः प्रधावितप्रतीहारोपनीतम्, अतिविचित्रत्रिभङ्गिभङ्गोत्कीर्णकर्णाटिकारूपरमणीयस्तम्भिकावष्टम्भम्, उज्जृम्भमाणमाणिक्यमकरमुखमुक्तमौक्तिकसरविराजितम्, अपूर्वकर्मनिर्मितभव्यव्यालावलीकीर्णमुखालंकृतम्, उच्चकाञ्चनसिंहासनद्वितयमुभौ भेजतुः ॥ क ॥

अन्योन्यकुशलप्रश्नसुखालापव्यतिकरविरामे च विदर्भेश्वरो निषधनाथमवादीत् ॥ ख ॥

"अद्यास्मत्कुलसंततिः सुकृतिनी धन्याद्य दिग्दक्षिणा
पुण्यप्राप्यसमागमातिथिजना जाताः कृतार्थाः श्रियः ।
श्लाघ्यं जन्म च जीवितं च निजमप्यद्यैव मन्यामहे
यत्रास्मत्सुकृतोदयेन बहुना यूयं गृहानागताः ॥ १ ॥

इतः प्रभृति च ।

आ ब्रह्मावधिविस्तरत्कविगिरो गीर्वाणकर्णातिथेः
कीर्तेः पूर्णकलेन्दुसुन्दररुचो यास्याम्यहं पात्रताम् ।
किं चान्यज्जनितक्रमोऽप्ययमभूदाकण्ठतृप्तस्य मे
युष्मत्सङ्गसुखामृतेन सफलः संसारचक्रभ्रमः" ॥ २ ॥

इत्यभिधाय प्रवणं प्रणयस्य, प्रगुणं गुणानाम्, अनुकूलं कुलक्रमस्य, योग्यं भाग्योदयस्य, सदृशं देशकालस्य, समानं मानोत्स-

तदन्विति ॥ सिंहासनादौ ह्युत्तम्भनस्तम्भिकासु पश्चिमभागे त्रिभङ्गिभङ्गेन स्थानकविशेषवैचित्र्येण स्त्रीरूपमुत्कीर्यते । मौक्तिकसरो मुक्ताहारः । व्यालः सिंहादिर्हिंस्रसत्त्वम् । तदावली काष्ठदन्तादिनिर्मिता शोभार्थं क्रियते ॥ क ॥

अद्येति ॥ पुण्यैः प्राप्यः समागमो येषां तथोक्ता अतिथिजना यासु । श्रियां ह्येतदेव फलम् । यदतिथयः सत्क्रियन्ते ॥ १ ॥

आब्रह्मेति ॥ कविवर्ण्यायाः स्वर्गतायाः इन्दुशुभ्रायाः कीर्तेः पात्रमहम् ॥ २ ॥

इत्यभिधायेति ॥ (अतिथेः) तस्य राज्ञोऽगर्वः संभ्रातिथेयं कुर्वन्भीमभूपो वारणा-

1 भक्ति. २ द्वय. ३ मुखा. ४ मानोक्तेः.

वसंततेः, सरूपं रूप[1]संपदाम्, उचितमा[2]चारस्यातिथेराथिथेय-
मगर्वः कुर्वन्, दुर्वारवैरिवारणान्वारणान्, वायुवे[3]गांस्तुरगांस्तुरगा-
न्, समुल्लसितांशुमञ्जरीजालजनितेन्द्रचापचक्र[4]भ्रमप्रमाणं [5]माणि-
क्यम्, एकत्रग्रथिततारापकरानुकारान्हारान्, [6]उज्ज्वलभांसि वा-
सांसि, सलावण्याः पण्यनारीश्च स्वयमुपढौकयांचकार ॥ क ॥

प्रथमसमागमेऽप्यप्रमेयप्रेमारम्भरभसोल्लासितहृदयः पुनः सो-
त्कर्षहर्षोद्रेदगद्गदाक्षरमिदमवादीत् ॥ ख ॥

"आसेतोः कपिकीर्तनाङ्कशिखरादाराच्च विन्ध्यावधे-
रा पूर्वापरसिन्धुसीमविषयस्त्वन्मुद्रया मुद्र्यताम् ।
अद्यास्मद्गृहमागतस्य भवतो जाता विधेया वयं
स्वीकारः क्रियतां किमन्यदपरं प्राणेषु चार्थेषु च ॥ ३ ॥"

एवमुपबृंहयति प्रेम, प्रकाशयति प्रियंवदताम्, उद्योतयत्युदार-
ताम्, दर्शयत्यादरम्, आविर्भावयति सर्वभावं, भीमभूभुजि नलो-
ऽपि "सरलस्वभावः स्वच्छार्द्रहृदयोऽयं महानुभावः" इति चिन्त-
यन् "अलमलमखिलात्मसर्वस्वोपनयनेन, भवद्दर्शनमेवास्माकमिह
सार्णवसुवर्णपूर्णवसुमतीलाभादपि परमो लाभः । नहि प्रियतमद-
र्शनसुखाद्वित्तलाभसुखमतिरिच्यते । न चं भवद्विभवेऽप्यस्माकं पर-
स्वबुद्धिर्नापि भवच्छरीरेऽप्येनात्मभावः । किंचान्यदेवंविधसूक्तसूनृ-
तामृतगर्भगीर्भिरानन्दयतास्मन्मनो महानुभावेन किं न कृतम-
भिहितं वा प्रणयोचितम्," इति ब्रुवाणस्तं बहु मानयामास ॥ग॥

दिकमुपढौकयांचकार । वारणा निषेधका गजाश्च ॥ क ॥

आसेतोरिति ॥ कपिकीर्तनाङ्कानि शिखराणि यस्येति सेतुविशेषणम् । सेतोः
कपिभिः कृतत्वात् ॥ ३ ॥

१ रूपेति क्वचिन्नास्ति. २ माचारस्य तस्याति. ३ वायुवेगांस्तुरगान्; अमूल्यं समु. ४ क्रमप्रमाणम्.
५ माणिक्यजातं. ६ उज्ज्व लभासिरसाः सलावण्याः. ७ श्चायमुप. ८ मुद्रितम्. ९ प्रियदर्शन.
१० हि. ११ विभवेष्वस्माकं. १२ रेनात्मभावः.

एवंविधे च व्यतिकरे वैतालिकः प्रस्तुतमपाठीत् ॥ क ॥

आ पूर्वापरदक्षिणोत्तरककुप्पर्यन्तवेलावना-
दाज्ञां मौलिषु मालिकामिव नृपाः कुर्वन्तु दीर्घायुषोः।
ब्रह्मस्तम्बविलम्बिकीर्तिलतयोर्विस्तारिलक्ष्मीकयो-
रन्योन्यस्य दिनानि यान्तु युवयोः स्नेहेन सौख्येन च ॥ ४ ॥

एवमुपक्रमाविरुद्धविद्ग्दालापलीलया परस्परमाश्यानतुहिन-शिलाशकलाकारकर्पूरपारीपरिकरितताम्बूलार्पणप्रणयेन च परितुष्टपरिजनपरिहासगोष्ठ्या च किमप्यभिनवम्, किमपि पुरातनम्, किमप्युत्पाद्यम्, किमपि यथावस्थितं जल्पाकजनजल्पितं भावयन्तौ तस्थतुः स्थवीयसीं वेलाम् ॥ ख ॥

अनन्तरमनुसरति मध्यभागमम्बरस्यांशुमालिनि नलः "स्वगृहानलंकुर्वन्तु भवन्तः" इति प्रश्रयेण विदर्भेश्वरं विससर्ज ॥ग॥

गते च तस्मिन् "अहो वात्सल्यम्, अहो परमौदार्यम्, अहो लोकवृत्तकौशलम्, अहो वाग्विभववैदग्ध्यम्, अहो प्रश्रयोऽस्य विदर्भराजस्य" इति तद्गुणप्रवणाः कथाः कुर्वन्नासजनपरिजनेन सह मुहूर्तमिवासांचक्रे ॥ घ ॥

चिन्तितवांश्च ।

अनुगुणघटनेन यद्यपीयं भवति हि हस्तगतेव कार्यसिद्धिः ।
भयतरलभुजंगवक्रवृत्तेस्तदपि न विश्वसिमो वयं विधातुः ॥५॥

आपूर्वेति ॥ ब्रह्मस्तम्बो ब्रह्माण्डम् ॥ ४ ॥

एवमिति ॥ आश्यानमविलीनं यत्तुहिनं हिमं तस्य शिलाशकलं तदाकारस्य कर्पूरस्य पारी शकलं तया परिकरितस्य संबद्धस्य ताम्बूलस्यार्पणप्रणयेन । अतिशयेन स्थूला स्थवीयसी । "स्थूलदूर—" इत्यादिना सिद्धम् ॥ ख ॥

अन्विति ॥ अनुगुणानामनुकूलानां घटनेन संयोजनेन हि स्फुटं सिद्धिर्हस्तगतेव

१ विदग्धा. २ गोष्ठ्यां च. ३ उत्पाद्यम्. ४ भावयन्तावतस्थतुः.

तथाहि ।

अङ्गाः कङ्ककलिङ्गवङ्गमगधाः सर्वेऽप्यमी पार्थिवा
दिक्पालाश्च मरुत्पतिप्रभृतयः कन्यार्थिनः संगताः ।
नो विद्मः कथमेष्यतीह घटनां कार्यं यतस्तत्क्षणा-
न्नानाभङ्गिभिरिन्द्रजालसदृशं दैवं हि चित्रीयते ॥ ६ ॥

अथवा ।

का नाम तत्र चिन्ता प्रभवति पुरुषस्य पौरुषं यत्र ।
वाङ्मनसयोरविषये विधौ च चिन्तान्तरं[2] किमिह ॥ ७ ॥

एवमनेक[3]वितर्कभङ्ग[4]भाजि भूभुजि, भुजबलशालिषु विसर्जितेषु सेवकसामन्तेषु, विरलीकृते परितः परिजने, परिहासपेशलालापजनगोष्ठीप्रक्रमेणातिक्रान्ते स्तोकसमये, भूरिभव्याभरणावरणरमणीयरूपाः, काश्चिदार्द्रक्रमुकफल[5]हस्ताः, काश्चित्कक्षावलम्बिततांबूलीपत्रपिण्डकरण्डकाः, काश्चित्पिहितपट्टांशुकपटलिकापाणयः, काश्चित्काश्मीरकरम्बितकस्तूरिकामोदामन्दचन्दनभाञ्जि भाजनानि भजमानाः, काश्चि[6]द्दवाननालिकेरजम्बीरबीजपूरकपूरितपात्रीपाणयः काश्चिदसंख्यखण्डखाद्यविशेषानमूल्यमाङ्गल्य[7]माल्याभरणानि च सकौतुकमादाय दमयन्त्या प्रहिताः [8]प्रथमप्रबोधितप्रतीहारसूचिताः प्रविविशुरन्युब्जाः कुब्जिका वामनिकाश्च ॥ क ॥

भवति । भयेन तरलो लोलः । तरलत्वं चात्र वक्रतातिशयहेतुः ॥ ९ ॥

**का नामेति** ॥ यत्र कार्ये पुरुषस्य पौरुषं भवति तत्र का चिन्ता, नैवेत्यर्थः । विधौ दैवे पुनर्वाङ्मनसयोरगोचरे किं चिन्तान्तरम्, तदेव प्रमाणमित्यर्थः । अन्तरशब्दो विशेषार्थः । उभयथापि चिन्ता न कार्येति भावः ॥ वाक् च मनश्च वाङ्मनसे । "अचतुर–" इति सूत्रेण सिद्धम् ॥ ७ ॥

**एवमिति** ॥ अवानानि सार्द्राणि, नालिकेरजम्बीरबीजपूराणि तैः पूरिता या पात्री

१ कुम्भ. २ चिन्तान्तरं किमप्याह. ३ मनेकविध. ४ भङ्गेति क्वचिन्न. ५ फलकहस्ताः; फलहस्तकहस्ताः. ६ न्नारङ्गनारि. ७ मङ्गल्य. ८ प्रथमप्रधावितमती.

प्रविश्य च सविस्मयाः स्मररूपातिशायिनं नरपतिमवलोक्य "साधु भोः स्वामिनि, साधु । स्थानेऽभिनिविष्टासि, योग्ये जाताग्रहासि, पात्रे जातस्पृहासि, लप्स्यसे जन्मफलम्, अवाप्स्यसि स्त्रीस्वभावभाग्यम्, अनुभविष्यसि यौवनसुखानि, मानयिष्यसि संसारफलमहोत्सवम् । अहो वन्दनीया सा कापि पुरुषरत्नाकरकुक्षिर्जननी, यस्यां सकलसंसारनरहारावलीमध्यमहानायकोऽयमुत्पन्नः" इत्यवधारयन्त्यो मनाङ्नमितमौलिदोलितसीमन्तमुक्ताफलाः "स्वामिन्नयमस्मदीयः प्रणामः, अन्यापि क्वापि काचित्प्रणमति" इत्यभिधाय स्मयमानवदनकमलाः सलीलमवनिपालं प्रणेमुः ॥ क ॥

अन्योन्यकृतसंबोधनाश्च सहर्षमिदमवोचन् ॥ ख ॥

"हंहो हंसि चकोरि चन्द्रवदने चन्द्रप्रभे चन्दने
चम्पे चङ्गि लवङ्गि गौरि कलिके कक्कोलिके मालति ।
एत प्राप्नुत जन्मजीवितफलं लावण्यलक्ष्मीनिधौ
सौभाग्यामृतनिर्जरे नरपतौ निर्वान्तु नेत्राणि वः ॥ ८ ॥

अपि च ।

कुन्दे सुन्दरि चन्द्रि नन्दनि हले दिष्ट्यार्य वर्धामहे
देव्याः सोऽयमनङ्गसुन्दरवपुः प्राणेश्वरः प्राप्तवान् ।
तस्याः संप्रति यत्कृते कृशतनोः क्रीडावने शाखिनां
दीर्घश्वासमरुद्भिरग्निपरुषैर्म्लायन्ति ते पल्लवाः ॥ ९ ॥

सा पाणौ यासाम् । वामं शुष्कं फलम् ॥ न्युब्जा अधोमुख्यः पश्चान्नव्योगः । दिदृक्षारसेनोर्ध्ववदना इति भावः । एतच्च कुब्जिकादीनां विशेषणम् ॥ क ॥

हंहो इति ॥ हंहो इति संबोधने । एत आगच्छत ॥ ८ ॥

कुन्दे इति ॥ चन्देरगन्तादाह्लादार्थाद्गौरादित्वान्ङीष् । वर्धामहे इति हर्षातिशयोक्तिः ॥ ९ ॥

---

1 बद्धस्पृहा. 2 स्त्रीसौभाग्यभावभाग्यं; स्त्रीभावभाग्यम्. 3 संसारम्. 4 यस्याः 5 एतत्प्राक्तन; एतत्प्राप्नुत.

अपिच ।

यं श्रुत्वैव मनोभवालसदृशा देव्या धृतोन्मादया
नीयन्ते गृहदीर्घिकातटतरुच्छायाश्रये वासराः ।
प्राप्तः शोणसरोजपत्रनयनो निःशेषसीमन्तिनी-
श्राम्यन्नेत्रपतत्रिविश्रमतरुः सोऽयं नलो नैषधः" ॥ १० ॥

एवमन्योन्यमभिधाय समीपमुपसृतास्ताः क्षितिपतिस्त्वनुरागत-रङ्गतरत्तारकेण सादरं दूरोत्क्षिप्तपक्ष्मणा चक्षुषा संतोषपुञ्जमञ्जूषिका इव, आनन्दकन्दलीरिव, अमृतपङ्कपुत्रिका इव, मधुमास-विकसितसहकारमञ्जरीरिव दमयन्तीप्रेषिताः सस्पृहमवलोकयन् "इत एत कुशलं तत्रभवतीनाम्, उपविशत, गृह्णीत ताम्बूलम्, आवेदयत भवत्स्वामिनीसंदेशम्," इति ससंभ्रमं संभाषयामास ॥ क॥

ताश्च "महानयं प्रसादः" इति ब्रुवाणाः समुपविश्य "राजाधिराज, राजीवदलदीर्घाक्षी क्षेमवार्तां पृच्छति 'न नाम देवस्यापघने घर्मांशुघर्मोर्मिनिर्मितः कोऽपि खेदः समपद्यत, न वा समविषममार्गलङ्घनश्रमेण कापि परिमाथिनी परिजनस्य ग्लानिरभूत्, बहूनि दिनानि देवेनाध्वनि विलम्बितम्' इदं च तया प्राणेश्वरस्य प्रियं प्राभृतं प्रहितम्, इदमुक्तम्, इदमेकान्तसंदिष्टम्, इदं प्रकाशप्रश्रयापलीलायितम्" 'इति राजानमञ्जसा जजल्पुः ॥ ख ॥

यं श्रुत्वेति ॥ नेत्राण्येव पतत्रिणः पक्षिणस्तेषां विश्रामतरुः ॥ १० ॥

एवमिति ॥ एवं परस्परमभिधाय समीपं गतास्ताः प्रेमोर्मिचञ्चत्कनीनिकेन सादरं दूरोत्क्षिप्तपक्ष्मणा चक्षुषा सस्पृहमवलोकयन् क्षितिपतिः ससंभ्रमम् "इत एत—" इत्याद्यालपत् ॥ संतोषपुञ्जमञ्जूषिका इत्यादि तासां विशेषणानि ॥ क ॥

ताश्चेति ॥ ननामेति । देवस्य, अपघने शरीरे न नामेत्यभ्युपगमगर्भायां पृच्छा-

१ तिः सानुराग. २ इतइत एत. ३ स्व. ४ राजाधिराजं ५ स्वेदः.

सोऽपि स्मरव्यापारकोरकिताभिः शृङ्गाररससेकपल्लविताभिर्मुग्धस्मितांशुमञ्जरिताभिरमृतच्छटाभिरिव वाग्भिः किमपि सरलाभिः, किमपि नर्मोक्तिकुटिलाभिः, किमपि कथयन्, किमपि पृच्छन्, किमपि संदिशन्, अनु जल्पमनुजल्पितम्, अनु हासमनुहसितम्, अनु सुभाषितमनुसुभाषितम्, अनु प्रियमनुप्रीतम्, प्रसादप्रदानोद्दीपितोद्दामानुरागास्ताः कुर्वन्नतिचिरमिव गोष्ठीलीलयाऽवतस्थे ॥ क ॥

"अहो नु खल्वस्य नरपतेः, अनश्लीलं शीलम्, अनाहार्यमौदार्यम्, अवञ्चनं वचनम्, अदैन्यं दानम्, अस्मयं स्मितम्, अविचारगोचरं गाम्भीर्यम्" इति भावयन्त्यस्ताश्च कांचिदुचितविनोदैरतिवाह्य वेलाम्, अनुभूय किमपि गोष्ठीसुखम्, आख्याय च किंचिदिव दमयन्तीविनोदविलासव्यतिकरम् "आज्ञापयतु देवोऽस्मान्गमनाय, भवद्वार्तामृतपानार्थिनी देवी त्वरिताऽस्मत्प्रत्यावृत्तिमवेक्षमाणा तिष्ठति" इत्यभिधायानुमता यथागतमगच्छन् ॥ ख ॥

गतासु च तासु, प्रगल्भं प्रज्ञायाम्, अचरमं वाचि, कुशलं कलासु, निपुणं नीतौ, सप्रतिभं सभायाम्, आश्चर्यभूतमाहूय पर्वतक-

याम् । नवेति पक्षान्तरगर्भायाम् ॥ ख ॥

**सोऽपीति** ॥ नल एवमेवं कुर्वन् गोष्ठीविलासेनास्थात् ॥ जल्पितमनु लक्ष्यीकृत्य जल्पितं कुर्वन् । ता उद्दीपितानुरागाः कुर्वन् इत्येवं कुर्वञ्शब्द उभयत्रापि संबध्यते । "अनु जल्पमनुजल्पितम्" इति यदा कचित्पाठः । तदा अनुजल्पितमिति क्रियाविशेषणम् । अनुगतं जल्पितं यत्रेति । अनु जल्पमित्यादिषु तु अनुयोगे द्वितीया ॥ क ॥

---

१ सुरहितः कचित्पाठः. २ अनुप्रियमप्रमेयप्रसाद. ३ क्वचिन्न. ४ कांचिदप्यविदितामुचित. ५ त्वरितमस्म. ६ नुमतास्ता. ७ प्रतिभायाम्.

मनोज्ञं वासनकुसुमाभरणीकृत्य कर्णिकाकर्णपूरकर्पूरलो[1]ष्टमुक्ता-
वलीमुख्यभक्ष्यभूषणांशुकादिसंमानदानादरपरि[2]तोषितेन तेन पु-
ष्कराक्षपुरःसरं किंनरमिथुनेन सह दमयन्तीं प्रति प्रेषयामास ॥क॥

स्वयं च शाङ्खिकमुखमरुत्पूर्यमाणशङ्खस्वनविभिन्नै[3]र्भांकारिमध्या-
ह्नभेरीरवेण निर्यद्वेलाविलासिनीचरणाभरणरणन्मणिनूपुरझंका-
रेण च निवेद्य[4]माने मध्याह्नसमये माध्याह्निककरणायोदतिष्ठत् ॥ख॥

क्रमेण च निःसृते समस्तसेवकजने, विश्रान्ततूर्यतालगीतासु
निर्यातनर्तकीविरहखेदादिव मूकीभूतासु नृत्यशालासु, निःशब्द-
तया सुप्तास्विवार्थाधिकारि[5]ककुटीषु, शून्यतया मध्याह्नतन्द्रीमूर्छि-
तेष्विव समस्तमण्डपेषु, संक्रान्तसेवाविलासिनीचरणकुङ्कुमपदप-
ङ्क्तिया विकीर्णविकसितरक्तारविन्दे[6] इव प्रकाशमाने राजभवनाङ्ग-
णे, घनं ध्वनन्ती[7]षु भोजनावसरशङ्खकाहला[8]सु, प्रधावमाने[9]षु प्र-
त्यासन्नवाचकजनेषु, परिमृज्यमानास्वतिथिसत्र[10]शालासु, सज्जीक्रि-
यमाणेष्वग्राशनब्राह्मणेषु, प्रवेश्यमानासु गोग्रासयोग्यासु कपि[11]-
लासु पुण्यगवीषु, प्रक्षाल्यमानेषु वायसबलिस्तम्भशिखरफलके-
षु, बहिर्दीयमानेषु, दीनानाथभिक्षुकभैक्ष्य[12]पिण्डेषु, समुपलिप्यमा-
नासु भोजनस्थानवेदीषु संचार्यमाणेषु चकोर[13]पञ्जरेषु, निवेद्य-
माननैवेद्यासु पूज्यराज्याधिदेवतासु, वैश्वदेवाहुतिगन्धवाहिनि व-
हति विविधान्नपाकपरिमलमनोहरे महानसमरुति, निर्वर्तितमज्ज-
नादिक्रियाकलापे भजति भोजनभुवं भूभुजि, बहिः सूपकारकल-
कलः समुल्ललास ॥ ग ॥

**क्रमेणेति** ॥ महानसं पाकस्थानम् ॥ ग ॥

---

१ मौक्तिकावली. २ संतोषिते. ३ भांकारि कचिन्नास्ति; मध्याह्नभांकारिभेरी. ४ निवेद्यमानम-
ध्याह्नसमयः. ५ कारिकाकुटीषु. ६ विन्दमकरे. ७ स्वनन्तीषु. ८ कालहलासु. ९ प्रधावमानेषु.
१० सत्र. ११ कचिन्न. १२ क्ष. १३ शुकचकोर.

आज्यं प्राज्यमभिन्नकुन्दकलिकाकल्पश्च शाल्योदनो
सूपामोदमनोहरा शिखरिणी स्वादूनि शाकानि च ।
पेयास्वाद्यफवल्यलेह्यबहुलं नानाविधं भुज्यतां
भोज्यं भीममहानृपस्य सुतया संप्रेषितं सैनिकाः ॥११॥

अहो नु खल्वमी मत्स्य[2]मांसैर्विरहितमुदीच्यप्रतीच्य[3]प्राच्यजनाः प्रियसक्तवो भोक्तुमेव न जानन्ति ॥ क ॥

विरलः खलु दाक्षिणात्येषु मांसाशनव्यवहारः ॥ ख ॥

तदाकर्ण्यतां भो नैषधाः ॥ ग ॥

आज्यप्राज्यपरा[4]न्नकूरकवलैर्मन्दां वि[5]धाय क्षुधां
चातुर्जातकसंस्कृतो नु शनकैरिक्षो रसः पीयताम् ।
सं[6]भारस्पृहणीयतेमनरसानास्वाद्य किंचित्ततः
स्निग्धस्तब्धदधिद्रवेण स[7]रसः शाल्योद[8]नो भुज्यताम् ॥१२॥

राजा तु "प्रतीहार, विनिश्चीयतां किमयं बहिः कलकलव्यतिकरः" इत्यभिधाय तत्कालयोग्यपरिजनपरिवृतो भोक्तुमुपाविशत् ॥ घ ॥

त्वरितं च गत्वागतश्च स प्रतीहारो विज्ञापयांबभूव ॥ ङ ॥

"देव, दमयन्त्या प्रहिताः सूपकाराः सैन्यजनम्, आ ब्राह्म-

**आज्यमिति** ॥ अभिन्नकुन्दकलिकया कल्यते मीयते उपमीयते इति पावत् । कलेरदन्तात् "अचो यत्" इति सूत्रेण यत् । केचित्तु पवर्गोपधं पठन्ति ॥ ११ ॥

**आज्यप्राज्यमिति** ॥ "त्वगेलापत्रकं चैव त्रिगन्धं च त्रिजातकम् । तदेव मरिचैर्युक्तं चातुर्जातकमुच्यते" तेन संस्कृतः कृतगुणान्तरश्चातुर्जातकसंस्कृतः ॥ सरलः सुनिष्पन्नदीर्घतण्डुलपाकजः । अतिक्लिन्नतादिदोषरहितश्च ॥ दधिद्रवो वस्त्रगालितं दधि ॥ १२ ॥

---

१ सूपो धूपमनो. २ मत्स्येति क्वचिन्न. ३ प्राच्यप्रतीच्य; प्राच्यप्रतीच्यपरिजनाः. ४ वरान्न. ५ निधाय. ६ संसार. ७ सरलः. ८ शाल्योदनं. ९ ततः.

णान्त्यजगोपालबालकम्, आ करितुरगवाहनम्, आ सामन्तनियुक्तकम्, आस्वाद्यैस्तैस्तैरन्नविशेषैर्भोजयन्ति ॥ क ॥

लग्नाः सर्वतो दृश्यन्ते पर्वताः पक्वान्नस्य, राशयः शाल्योदनस्य, स्तूपाः सूपस्य, निर्झराः सर्पिषः, सिन्धवो मधुनः, निकराः शर्करायाः, स्रोतांसि दधिदुग्धयोः, शैलाः शाकानाम्, निपानानि पानकानाम्, कुल्याः फलरसानाम्, कूटाः कषायाम्ललवणतिक्तमधुरोपदंशानाम् ॥ ख ॥

एवमकार्पण्यमिच्छया भोजितं सैन्यम् ॥ ग ॥

अपिच ।

भुक्तान्ते घृतदिग्धहस्ततलयोरुद्वर्तनं चन्दनं
पश्चान्नागरखण्डपाण्डुरदलैस्ताम्बूलदानक्रमः ।
एकैकस्य मृणालतन्तुमृदुनी दत्ते ततो वाससी
देव्या किंचिदचिन्त्यमेव भवतः सैन्यातिथेयं कृतम् ॥ १३॥

इयं च रसवती देवस्य तया स्वहस्तपल्लवपरिमलनसंस्कृतैः पाकविशेषैरलंकृत्य स्वमुद्रया मुद्रिता प्रहिता" इत्यभिधाय व्यरंसीत् ॥ घ ॥

राजा तु मनाक्तरलितशिराः "सस्मितमहो निरतिशयमुदारगम्भीरमुचितव्यवहारहारि लीलायितं तस्याः, स्पृहणीयपरिमलश्वायमपूर्व इव कोऽपि पाकक्रमः ॥ ङ ॥

**भुक्तान्त इति** ॥ वनवासदेशोद्भवानि नागवल्लीदलानि नागरैर्विदग्धैश्चर्व्यन्ते खण्ड्यन्ते इति नागरखण्डसंज्ञानि ॥ १३ ॥

**इयं चेति** ॥ स्वहस्ताभ्यां परिमलनं यथोचितगन्धद्रव्यक्षेपेण सुरभीकरणम्॥घ॥

१ तैस्तैः पाक.

तथाहि।

इदमम्लमप्यनम्लास्वादम्, इदमीषत्कषायमपि मधुरतां नीत[1]-म्, इदमेकरसमप्यनेकरसीकृतम्, इदमतिमृष्टतया[2]ऽमृतमप्यति-शेते, रसवत्या[3]मपि रसवती विदर्भराजात्मजा" इति विभावयं-[4]स्तांस्तया प्रहितान्पाकविशेषानादरेणास्वादयामास ॥ क॥

चिन्तितवांश्च

"षड्रसाः किल वैद्येषु भरतेऽष्टौ नवापि वा।
तया तु पद्मपत्राक्ष्या सर्वमेकरसीकृतम् ॥ १४ ॥

तथाहि।

अग्रस्थामिव चेतसः पुर इव व्यालम्बमानां दृशो-
र्जल्पन्तीमिव रुन्धतीमिव मनाङ्मुग्धं हसन्तीमिव।
निद्रामुद्रितलोचना अपि वयं तां विश्वरूपायितां
पश्यामो बहिरन्तरे निशि दिवा मार्गेषु गेहेषु च ॥१५॥"

एवमवधारयन् अतृप्त इव तया प्रहितेषु स्वहस्तपक्वपाकरस[5]-विशेषेषु, असंतुष्टस्तत्कथायाम्, आचम्य, चन्दनागुरुपरिमलेन[6]

**इदमिति** ॥ रसवत्यामपि रसवती रसिका रागिणीति यावत्। तात्पर्यवतीति च॥क

**षडिति** ॥ एकरसीकृतमुत्कृष्टास्वादीकृतम् । चमत्कृतत्वात्। आत्मविषये ए-कानुरागीकृतं वा। यदनेकरसं तत्कथमेकरसीभवेदिति विरोधं पुनरर्थस्तुशब्द उत्था-पयति ॥ १४ ॥

**तथाहि** । इत्यनेनात्मानुभवसंभावनाद्वारेणैकरसत्वमेव व्यनक्ति ॥

**अग्रस्थामिति** ॥ विश्वं रूपमस्येति विश्वरूपो हरिः ॥ १५ ॥

**एवमिति** ॥ उत्तम्भितस्य तत्कालारोपितस्य जङ्गमस्य चित्रकूटाख्यस्याभ्रंलिह-

---

१ आनीतम्. २ मिष्टतया. ३ तद्रसव. ४ तांस्तान्. ५ रसेषु ६ परिमलपाण्डुरित.

पाण्डुरितपाणिपल्लवः, लवङ्गकक्कोलकरम्बितताम्बूलमुत्सार्पिकर्पूर-परिमलमादाय, विकीर्णविविधकुसुमप्रकरहारिणि[1] पक्षकर्दमाच्छ-च्छटोच्छोटितपर्यन्तभित्तिभागे[2] लम्बितप्रलम्बजाम्बूनदपद्मदाम्नि धूपधूमामोदिनि चूर्णितकर्पूररङ्गरेखाभाजि भोजनानन्तरमपरेऽप-राह्णविनोदमण्डपे मनाग्विश्रम्य रणरणकाक्रान्तहृदयो दूरदिग-न्तालोकनकुतूहलितः सरित्तीरोत्तम्भिताभ्रंलिहसौधस्कन्धभूमिमा-[3][4]रुह्य च तस्यामूर्ध्वे एव ध्रियमाणमायूरातपत्रयुगलः,[5][6] सलीलाल-सपदैरितस्ततः परिक्रामन्, नेदीयसि सरित्संगमाम्भसि मध्याह्न-मखिलमवगाहनसुखमनुभूय तीरमुत्तीर्णासु तिमिरशङ्कया कृतदू-रचङ्क्रमणैश्चक्रवाकचक्रवालैराकुलमवलोक्यमानासु,[7] पुलिनपांसुवि-हरणविरामे विकसितविविधवीरुन्धि रोधांसि रदन्तीषु दन्तिप-ङ्क्तिषु दत्तदृष्टिः, विरलनलिनीपत्रान्तरालसुप्तोत्थितस्य,[8] किंचिदवा-[9]ञ्चितचटुलचञ्चोः, चरतः, चटुलचञ्चरीकिणि विकचकमलवने, रा-जहंसकुलकलापस्य करिकलभदन्तदण्डपाण्डुबिसकाण्डभङ्गटंका-रानाकर्णयन्, अपराह्णमज्जनागताभिः कुण्डिनपुरपुरंध्रिभिराश्चर्य-रसोर्मिमुषितनिमेषैर्निष्कम्पनीलोत्पलपलाशलीलायमानैर्नेत्रपुटै-रापीयमानमुखेन्दुद्युतिः, दर्शिततरङ्गभ्रूभङ्गया, दूरोच्छलद्बालश-

सौधस्य स्कन्धभूमिमारुह्य तस्यामितस्ततः परिक्रामन्, निकटतरे नदीसंभेदोदके कृ-तजलक्रीडासु, तमोभ्रान्त्या चक्रैराकुलमालोक्यमानासु, कृतधूलीस्नानासु, तटीः पा-टयन्तीषु दन्तिपङ्क्तिषु न्यस्तदृष्टिः, वने चरतो हंसवृन्दस्य बिसभङ्गरवाञ्शृण्वन्, कु-ण्डिनस्त्रीभिर्दृश्यमानमुखेन्दुश्रीः, उच्छलच्छफरीछलविलोकितया जलदेवतया वीक्ष्य-माणरूपसंपदिव, क्षणमेकं सरसीषु क्षणं चूतालीषु क्षणं गृहालीषु क्षणमवरोधभवन-पङ्क्तिषु क्षणं पुरपद्धतिषु विश्रान्तनेत्रो नलश्चिरमस्थात् ॥ सादरेक्षणं नेत्रपानम्। तत्र

---

१ प्रकरप्रकारहारि. २ छटाच्छोटित. ३ सरित्तीरोत्तंसिता. ४ मारुरोह. आरुह्य च. ५ क्रि-यमा. ६ पत्रमण्डलः. ७ मालोक्यमा. ८ वनान्तराल. ९ किंचिदिवा.

फरीछलेन विस्फारितविलोचनया, सरित्संगमसलिलाधिदेवतयापि विलोक्यमानरूपसंपत्तिरिव, क्षणमविरलचलच्चञ्चरीकचक्रचुम्बिताम्बुरुहासु क्रीडाकमलसरसीषु, क्षणमुपान्तपङ्क्तीभूतमञ्जरितसहकारराजिषु स्मर[1]वाजिवाह्यालीषु, क्षणमुन्मिषत्कुसुममनोहा[2]रितरुलतारमणीयासु भवनोद्यानमालासु, क्षणमुत्पतत्पताकापटपल्लवराजिविराजितासु भीमभूपालान्तःपुरप्रासाद[3]पङ्क्तिषु, क्षणमवकीर्णकुसुमरङ्गावलीरम्यासु नगरवीथीषु विश्रान्तविलोचनश्चिरमवतस्थे ॥ क ॥

चिन्तितवांश्च ।

नोद्याने न तरङ्गिणीपरिसरे नो रम्यहर्म्ये[4] न वा
पुष्प्यत्पुष्करगर्भगुञ्जदलिषु क्रीडातडागेष्वपि ।
वात्याघूर्णितशीर्णपर्णतरला दृष्टिर्मदीयाधुना
लुभ्यल्लुब्धकभी[5]षितेव हरिणी श्रान्तापि विश्राम्यति ॥ १६ ॥

अपि च ।

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विहितैः शान्तिकशतैः ।
भ्रमावेशादङ्गे कमपि विदधद्भङ्गमसमं
स्मरापस्मारोऽयं भ्रमयति दृशं घूर्णयति च ॥ १७ ॥

पत्रपुटैर्युक्तमिति नेत्रपुटैरापीयमानेत्युक्तम् । कण्टकादिदोषरहितासु तरुराजिराजितासु च भूमिषु वाहवाहना ॥ तथा च– "रम्या समतला लोष्टकीलकण्टकवर्जिता । वाह्याली भूमिरभ्यर्णतरुराजिविराजिता" इति ॥ एतदेव पङ्क्तीभूतेत्यादिनोक्तम् ॥ हिङ्गुलुहरितालादिविचित्रवर्णकवच्चित्रहेतुत्वात्कुसुमान्येव रङ्गावली विचित्रवर्णकुसुमभक्तिः ॥ क

**नोद्यानेति** ॥ विश्राम्यतीति प्रत्येकं योज्यम् ॥ १६ ॥

**न गम्य इति** ॥ भ्रमः संदेहः । स चात्र दमयन्तीलोभविषयः ॥ १७ ॥

---

१ क्षणं वाजिवा. २ मनोहारिणीषु तरलितरमणीषु. तरलतारमणीयासु. ३ प्रासादपदपङ्क्तिषु. ४ हर्म्येषु वा, हर्म्येऽपि वा. ५ भायितेव; भापितेव.

किंचान्यदद्भुतम् ।

पौष्पाः पञ्चशराः शरासनमपि ज्याशून्यमिक्षोर्लता
जेतव्यं जगतां त्रयं प्रतिदिनं जेताप्यनङ्गः किल ।
इत्याश्चर्यपरंपराघटनया चेतश्चमत्कारय-
न्व्यापारः सुतरां विचारपदवीवंन्ध्यो[1] विधेर्वन्द्यताम् ॥ १८ ॥

एवमनेकविधवितर्कतरलितहृदये कुण्डिननगरवीथीविश्रान्तदृशि शनैरुद्वेल्लितमल्लिकाक्षपल्लवस्य[3] मृदुतरतरङ्गितसरितः कमलवनवायोः समर्पितवपुषि निषधभूभुजि, भुजंगनिर्मोकधवले वसानो वाससी, रणन्मणिकंकणैराकूर्परं पूरितप्रकोष्ठः श्रीखण्डपिण्डपाण्डुरिततनुरपूर्व इव पर्वतकः प्रतीहारसूचितः प्रविवेश ॥क॥

प्रविश्य च प्रकटितप्रणयप्रणामः प्रभुणा सविस्मयस्मितहुंकारेणाभिभाषितः[4] स्तोकान्नमितभ्रूसंज्ञया[5] विज्ञपयितुमारेभे ॥ ख ॥

"देव, श्रूयताम् । इतो गतवानहम् । अनन्तरमतिशयितस्वर्गान्मार्गाननेकविधचर्चाचारूणि चत्वराणि विलङ्घ्य, विहितमनःप्रसादान्प्रासादानवलोकयन्, इतस्ततः सस्मितस्मरालसचलद्वेलाविलासिनीविकारकूणितकोणेक्षणाक्षिप्तहृदयः, सेवाविरामनिःसरत्सामन्तसंकुलम्, अविरलगलन्मधुमञ्जरीपुञ्जपिञ्जरितसरससहकारव-

पौष्पा इति ॥ अत्र प्रथमोऽपिशब्दः शरासनस्य ज्याशून्यस्य शरापेक्षया द्वितीयश्च जेतुरनङ्गस्य प्रतिदिनजेतव्यजगत्त्रयापेक्षया वैषम्यव्यञ्जकः ॥ १८ ॥

एवमिति ॥ मल्लिकाक्षो हंसविशेषः ॥ चिरदृष्टस्यापि पर्वतकनाम्नो वामनस्यापूर्वत्वमिह पूर्वमभूषितस्य संप्रति पारितोषकभूषणभूषितत्वाद्दयितोदन्तप्रश्नतात्पर्याद्वा॥क॥

देव श्रूयतामिति ॥ मार्गांश्चत्वराणि च विलङ्घ्य, प्रासादान्पश्यन्, ईदृग्राजभवनमविशमिति संबन्धः । चर्चा गन्धोदकसेचनपुष्पप्रकारादिवार्त्तावशात्प्रस्तावान्नलप्रव-

---

१ विंध्यो. २ रुन्नमित. ३ पल्लवस्पर्शमृदुतर. ४ आभिभूषितः ५ स्तोको.

ननिकुञ्जपुञ्जितपुंस्कोकिलकुलकलरवरमणीयोद्यानमालावलयि-
तम्, उपान्तकृतमणिमन्दुरामन्दिरनिबद्धस्निग्धपोषणोत्कर्षहर्षहे-
षितराजवल्लभतुरंगम्, उत्तुङ्गशृङ्गसंगतमेङ्गलध्वजम्, अङ्गणोत्स-
ङ्गरङ्गत्क्रीडाकुरङ्गविहंगम्, अभङ्गाङ्गरक्षिरक्षितकक्षान्तररममाणरा-
जकुमारकम्, अतिसूक्ष्ममुक्ताफलरचिततरङ्गरम्यरङ्गरेखाराजिरा-
जिताजिरं राजभवनमविशम् ॥ क ॥

अतिमनोहारिणि यत्र सुपुष्करमालानि क्रीडावापीपयांसि
नागयूथं च, सारवाणि लीलोद्यानसारसमिथुनानि सेवककविवृन्दं
च, विलम्बितानि काञ्चनकुङ्कुमदामानि गीतं च, अनलसङ्गानि ल-
क्षप्रदीपवर्तिमुखानि प्रेक्षणकं च ॥ ख ॥

किं बहुना ।

सुस्थिततेजोराशेर्लक्ष्मीजनकस्य रत्ननिलयस्य ।
तस्योपरि प्लवन्ते वार्धेरिव वर्णकाः सर्वे ॥ १९ ॥

ण्यादिलक्षणा चामुण्डापि ॥ मणिमन्दुरेत्यत्र षष्ठीसमासः ॥ क ॥

अतीति ॥ यत्र राजभवने । सुपद्मश्रेणीनि पयांसि । यूथं च सुष्ठु पुष्करं शुण्डाग्रं यस्य तथोक्तम् । आलानमर्गलनस्तम्भोऽस्यास्तीति ॥ तथा सह आरवैः सारवाणि । वृन्दं च सारोत्कृष्टा वाणिर्यस्य तथाविधम् ॥ विशेषेण लम्बितानि लम्बायमानीकृतानि । गीतं च स्वरकृतविलम्बोपेतं तानोपेतं च ॥ अनलेन ज्वालालक्षणेन सङ्गो येषाम् । प्रेक्षणकं च नालसमनलसमोजस्वि । उच्चैः स्थाने गीयमानत्वात् । तथा गानमस्यास्तीति । इनिः । लक्षसंख्यद्रव्यपतीनां हि वेश्मसु यावल्लक्षं दीपा ज्वाल्यन्ते इति ख्यातिः ॥ ख ॥

सुस्थितेति ॥ तेजोराशिर्वडवानलः प्रतापचयश्च । लक्ष्मीर्विष्णुपत्नी शोभा च । तथाभूतस्य तस्य सागरोपमस्योपरि वर्णकाः स्तोतारः प्लवन्ते तरन्ति । अपरिच्छिन्नगुणत्वादलब्धमध्या बाह्यमेव वर्णयन्तीति भावः । वारो जलानि धीयन्तेऽस्मिन्निति वार्धिः ॥ १९ ॥

१ हेषितोत्कर्षहर्षितराज. २ मयूरध्वज.

तत्र च चलत्कञ्चुकिसंकुलं पातालमिवाग्रतःपुरमनन्तालयं प्र-
विश्य विविधकुसुमसंपत्संपन्नपुण्यपादपपरिकरिताङ्गणवापीपरिस्-
खलच्चक्रवाके चन्द्रशालाशालिनि, शैलूष इवानेकभूमिकाभाजि,
धनंजय इव सुभद्रान्विते, कुरुवंशाख्यान इव चारुचित्रविचित्रभि-
त्तिभाजि, तुहिनाचलोच्चकूटायमाने सुधाधवलस्कन्धे धाम्नि ध्वजा-
वलीविलसत्सप्तसप्तिसप्तौ सप्तमभूमिकायाम्, इतोमुखवातायने
निविष्टाम्, इतो गतास्ताः कुब्जवामनकन्यकास्त्वद्वार्ताव्यतिकरैर्वि-
नोदारम्भिणीः संभाषयन्तीम्, अनवरततरललोचनालोकनैर्नीलो-
त्पलोपहारमिव त्वदधिष्ठितायै दिशे दिशन्तीम्, उत्तरीयांशुकस्या-
च्छतया दृश्यमानमदनबाणव्रणकिणानुकारिकस्तूरिकापङ्कपत्रल-
ताङ्कितकुचकलशश्रियम्, अष्टमीशशाङ्कशकलश्रीशोभाभाजि ल-
लाटपट्टे स्मरपरवशात्रिपुरुषैरिव 'ममेयं ममेयं ममेयम्' इति संहर्षा-
त्कृतं स्ववर्णानुकारिस्वीकारचिह्नमिव कुङ्कुममृगमदमलयजरसरचि-
तत्रिपुण्ड्करेखात्रितयमुद्वहन्तीम्, आलोहितेन च त्वद्वार्तामृतपा-
नबालप्रवालप्रणालकेनेव कर्णप्रणयिना बालपल्लवेन विराजितव-
दनाम्, आसन्नमणिभित्तिदर्पणसंक्रान्तप्रतिबिम्बतया त्वत्संगमवा-

तत्र चेति ॥ कञ्चुकिनो महल्लका उरगाश्च । ( बहुनिलयं शेषनिलयं च । ) प्र-
विश्य ईदृग्विधे धाम्नि गृहे, सप्तमभूमिका सप्तमक्षणः, तत्र स्थिते इतोमुखे एव हस्ता-
दिसङ्केतकथिते एव, वातायने गवाक्षे, निविष्टामासीनां, दमयन्तीमद्राक्षमिति संब-
न्धः ॥ चन्द्रशाला शिरोगृहम् ॥ शैलूषो नटः । भूमिका गृहक्षणा वेषधारणं च ॥
शोभनानि भद्राणि गृहावयवविशेषास्तैरन्विते । पक्षे सुभद्रार्जुनपत्नी ॥ चारुश्चित्रेण
विचित्रा भित्तीर्भजते । अन्यत्र चित्रविचित्रौ शान्तनुसुतौ । तौ च कुरुवंशस्यानां भि-
त्तिभूतौ । तत्कलत्राभ्यामम्बिकाम्बालाभ्यां पाण्डुधृतराष्ट्रयोरुत्पन्नत्वात् ॥ तथा लग्नाः

१ अनन्तभयं पातालमिव तदन्तःपुरं प्राविशम्. २ चक्रवाकचक्रवाले. ३ विलसत्स. ४ सप्तभूमि.
५ तास्ताः. ६ व्यतिकरे. ७ स्मरबाणपरवश. ८ ममेयमिति संहर्षा. ९ चेति क्वचिन्न. भवद्वार्ता.

न्छाकृतसंतापसंविभागार्थमिव बहून्यात्मरूपाणि सृजन्तीम्, आसन्नवर्तिनीभिर्वीणादिविनोदविदुषीभिः समानवयोवेषाभिः सखीभिः सरस्वतीमिव सकलविद्याधिदेवताभिरुपास्यमानाम्, उन्मिषत्कुसुमाभरणरमणीयाभिश्चामरग्राहिणीभिर्वनदेवताभिरिव शरीरिणीं[1] वसन्तमासश्रियमुपसेव्यमानाम्, अनुलेपनपुष्पपाणिभिः प्रसाधिकाभिर्भवानीमिवानेकनाकनायकनारीभिराराध्यमानाम्[2], इतस्ततो निपतन्मण्डनमणिमयूखमञ्जरीजालच्छलेनामान्तमिव[3] कान्तिरसविसरमुत्सृजन्तीम्, अशेषाङ्गावयवेषु[4] प्रतिबिम्बितैरासन्नचित्रभित्तिरूपकैर्मायाविभिः सुरासुरैरिव विधीयमानाश्लेषाम्, अग्रस्थिते[5] पद्मरागमणिदर्पणे कन्दर्पातुरे रागिणी शशिनीव करुणयार्पितच्छायाम्, अशेषजगद्विजयास्त्रशालामिव मन्मथस्य, सङ्केतवसतिमिव समस्तसौन्दर्यगुणानाम्, अधिदेवतामिव सौभाग्यस्य, विपणिमिव लावण्यस्य, शिल्पसर्वस्वपरिणामरेखामिव विधातुः, अनन्त[6]संसाररोहणैकरत्नकन्दलीं दमयन्तीमद्राक्षम्[7] ॥ क ॥

ईक्षणामृतशलाकामवलोक्य[8] च तामतिहर्षविस्मयकौतुकोत्तानितचक्षुश्चिन्तितवानहम् ॥ ख ॥

सप्तसप्तेरादित्यस्य सप्तयोऽश्वा यत्र तस्मिन् ॥ अष्टमी शशाङ्कशकलेति ॥ खण्डशशिनो हि श्रियं ललाटं श्रयति । त्रयाणां सत्त्वरजस्तमसां पुरुषास्त्रिपुरुषाः ॥ यथा— "न बाधतेऽस्य त्रिगणः परस्परम्" इत्यत्र त्रयाणां धर्मादीनां गणः ॥ यथा च चण्डसिंहकृते चण्डिकाचरिते— "प्रियत्रिवर्गश्चक्रमे सकामम्" इति ॥ कर्मधारयस्तु संज्ञायामेव ॥ मणिदर्पणलक्षणे शशिनि कारुण्यादर्पितप्रतिकृतिमित्यर्थः । अवज्ञातो हि रागी म्रियते ॥ संसारो रोहणगिरिः, दमयन्ती च रत्नप्ररोहशलाका ॥ क ॥

१ सशरीरिणीं. २ नाकिनाय. ३ छलेनाङ्कष्वमाम्तमिव. ४ अशेषावयवेषु. ५ उपस्थिते. ६ अमून. ७ अद्राक्षीत्. ८ कामिवावलोक्य.

"इयं हि,

स्मरराजराजधानी मङ्गलवलभी विलासविहगानाम्।

शृङ्गाररङ्गशाला हरति न बाला मनः कस्य ॥ २० ॥

अपि च।

दग्धो विधिर्विधत्ते न सर्वगुणसुन्दरं जनं कमपि।

इत्यपवादभयादिव हरिणाक्षी वेधसा विहिता ॥ २१ ॥

किं चान्यत्।

लावण्यपुण्यपरमाणुदलं तदन्य-

दन्यः स चापि निपुणः खलु कोऽपि वेधाः।

येनाद्भुता कृतिरियं विहिता विशिष्ट-

कार्येण कारणविशेषगुणोऽनुमेयः ॥ २२ ॥"

एवं वितर्कयन्तं सापि मां पुष्कराक्षसूचितमुचितसंभ्रमेण मनाग्वलितकंधराकन्दलीकम्पितकर्णोत्पलमवलोक्य स्वागतप्रश्नानन्तरम् "अहो बहोः कालादभूत्सुप्रभातमद्योद्द्योतितमिव तम-

**दग्ध इति** ॥ दग्धशब्दो निन्दार्थे। दग्धो निन्द्यो विधिः (यतः) सर्वगुणपरिपूर्णं कमपि जनं न विधत्ते इति योऽसावपवादः। तद्भयादिव "तेनासौ सुन्दरी विहिता" तेन विधिना अपवादोद्विग्नेन। असाविति। साक्षाद्दृष्टा। सुन्दरीति। समग्रगुणसौन्दर्योपेता। अतस्तस्यां सृष्टायां स्रष्टुरपवादो न भविष्यतीति ॥ "हरिणाक्षी" इति पाठस्तु अक्षिमात्रसौन्दर्यार्थो न समग्रगुणसुन्दरतां वक्तीत्युपलक्षणपरतया निर्वाह्यः ॥ २१ ॥

**लावण्येति** ॥ येन निरुपमलावण्यदलपाटवेन वेधा दमयन्तीं सृष्टवान्। तद्दलपाटवमन्यत्। वेधाश्च। दलपाटवं वेधाश्च जगन्निर्माणविलक्षणावित्यर्थः। तद्द्वयमपि विशेषयन्नाह—**येनेत्यादि** ॥ येन दलपाटवेन वेधसा चेति ज्ञेयम् ॥ तत्रार्थे हेतुमाह—विशिष्टेत्यादि ॥ २२ ॥

**एवमिति** ॥ "स्मरराज–" इत्यादिपद्यत्रयेणैवमूहमानं पुष्कराक्षेण निवेदितं

१ वसतिः. २ इदं क्वचिन्न. ३ एवं हि. तर्कयन्तं. ४ मालोक्य.

स्काण्डपिण्डीकृतं कुण्डिनम्, अकाण्डाडम्बरितवसन्तविकासोत्स-व इवाभवत्सरित्संगमोपकण्ठवनविभागः, चिरात्संपन्ना सलक्षणा दक्षिणा दिगियम्, उन्निद्रित इव सह्याद्रिः, अमृतद्रवार्द्रित इवोज्जीवितोऽयं जनः" इत्यभिधाय "पर्वतक, कच्चित्कुशली परबलदलदावानलो नलः" इति स्मितमुग्धमधुरया गिरा सम-भाषत ॥ क ॥

अहमपि प्रणम्य यथोचितमनन्तरमतित्वरितसखीजनोपनी-तमासनमध्यास्य देवेन प्रहितानि तान्याभरणोपायनान्युपानै-षम् ॥ ख ॥

आदरेण तया गृहीतेषु तेषु, बहुमते मयि, प्रक्रान्ते त्वद्गुणग्र-हणगोष्ठीव्यतिकरे, नर्मसुखालापलीलयातिक्रामति स्तोककाल-कलापे, पुष्कराक्षोऽप्यभाषत ॥ ग ॥

"देवि, विज्ञापयामि यद्भयम्, ॥ घ ॥

एवमनुश्रुतमस्माभिः "किल सकलनाकिनायकपुरंदरपुरःसराः सर्वेऽपि लोकपालास्त्वामभिलषन्तोऽन्तःकरणारण्यलग्नमदनदावा-नला नलमायान्तमभ्यर्थितवन्तः यथा महानुभावा भवन्ति हि भवादृशाः परोपकारव्रतधर्माणः, तदेष प्रार्थ्यसे स्वप्रयोजननिरपे-क्षेण त्वयास्मदर्थे दमयन्ती वरणीया, इति" ॥ ङ ॥

तद्देवि, देवदूतकार्येणागतो निषधेश्वरः ॥ च ॥

मां "हे पर्वतक कच्चित्कुशली परसैन्यदावानलो नलः" इति वचनेन दमयन्ती सं-भाषितवती ॥ दावानलोपमानेन आत्मनोऽपि विरहसंतापहेतुत्वं नलस्य व्यनक्ति ॥ म-नाग्वलितेत्याद्यवलोकनक्रियाविशेषणम् ॥ क ॥

---

१ इवोर्जिते

५ भवादृशाः.

पृच्छतु वा देवी पर्वतकम्" ॥ क ॥

इति श्रुत्वा पुष्कराक्षभाषितम्, ईषद्विषादविलक्षस्मितस्मेरां दृशं मयि साचि संचारितवती ॥ ॥ ख ॥

मयापि संवादिते पुष्कराक्षवचने तस्मिन्, आकस्मिककठोरकाष्ठप्रहारव्यथामिवानुभवन्ती, विन्दतु वीणाक्वणो माधुर्यमितीव प्रतिपन्नमौनव्रता, लभेतां कर्णोत्पले परभागमितीव मुकुलितनयना, प्राप्नोतु शोभां मुक्तावलीदीप्तिजालमितीव मुक्तस्मिता, गच्छतु छायां कण्ठावलम्बिनी चम्पकमालेयमितीवाङ्गीकृतवैवर्ण्या, लभतां लीलाकमलमिदं सौभाग्यमितीवोच्छ्वसितवदना, सा क्षणमभूत् ॥ ग ॥

तत्र च व्यतिकरे

विगलितविलासमपरसमाकस्मिकजातभङ्गशृङ्गारम् ।
मूकितमिव मूर्छितमिव मुद्रितमिव भवनमिदमासीत् ॥२३॥

राजा तु "पर्वतक, ततस्ततः" ॥ घ ॥

पर्वतकोऽपि "देव, श्रूयताम् ॥ ङ ॥

अतः परम्

ईषन्निःसृतकुन्दकुड्मलसदृग्दन्तप्रभामञ्जरी
रोचिष्णुस्मितमन्थरां मयि दृशं संचारयन्ती मनाक् ।
अस्यन्ती करपद्मभृङ्गमधरे बन्धूकबुद्ध्यागतं
वारंवारमकम्पयत्तरलितस्तोकावतंसं शिरः ॥ २४ ॥

ततः परम् । वारितवारविलासिनीचाटुवचनक्रमम्, आकस्मिकविस्मयविस्मृतस्मितविलासम्, अतनुतुहिनाहतनवनलिनदलदीनदीर्घेक्षणम्, उष्णसरलश्वासारम्भिविषमविषादविच्छायि-

ततः परमिति ॥ तस्याः स्थानकमवस्था । लज्जितेव पिहितश्रवणा । श्रवणं

ताननेन्दुद्युति, तस्याः स्थानकमवलोक्य सखेदं सखीजनेन "देवि, भवन्निःश्वासपवनपरंपरया पर्यस्त इवास्ताचलहस्तावलम्बनमयमाश्रयति भगवान्भानुः, इयं च सौभाग्यशालिनि नले निलीनचित्तायास्तव लोकपालपार्थिवप्रार्थनाव्यतिकरमिममाकर्ण्य लज्जितेव पिहितश्रवणा दूरे भवति वासरश्रीः, इमानि निश्चलनिलीनमधुपनिपीयमानगर्भमधूनि संकोचयन्ति लोचनानीव कमलानि, संविभागीकृतविषादा इव विलासवयस्याः सरसीसरोरुहिण्यः, इमाश्च "कथमस्मत्पतयो मनुष्यकन्यकां कामयन्ते" इतीर्ष्याशोकवशादिव दिशः श्यामायन्ते, तत्प्रेष्यतामयं पर्वतकः" इत्यभिधीयमाना कथंकथमपि चिन्तान्तरायातिरस्कृतालापमीषदुन्नमय्य मुखं समुल्लसदशोकपल्लवानुकारि करतलमुत्तानीकृत्य मामविस्मरणीयसंमानदानावसाने व्यसर्जयत् ॥ क ॥

विसर्जितश्च तया तत्कालमाविर्भवद्विषादवशसंपन्नमौनया न पुनः संभाषितोऽस्मि, न वीक्षितोऽस्मि, न पृष्टम्, न संदिष्टं किमपि, केवलं चलन्नेत्रविभागप्रान्ततरत्तारया दृष्ट्या समवलोक्य समुत्तानितकरकमलसंज्ञयैव कथमपि संप्रेषितः 'कष्टम्' इति चिन्तयन्नलसालसैरसमञ्जसपातिभिः पश्चिममुखैरिव पादैरिहायातवान् ॥ ख ॥

तदैव दमयन्ती देवदूतकार्याङ्गीकरणव्यतिकरमिममाकर्ण्य परं विषादमापद्यत ॥ ग ॥

नक्षत्रं श्रोत्रं च ॥ क ॥

---

१ लोकपालपार्थिवयोः. २ इमान्याश्चर्यनिश्चल. ३ सरसीषु. ४ उन्नम्य. ५ पल्लवाकारि. ६ सानेऽपि. न किंचिदवादीत् व्यसर्जयच्च. ७ दृशा. ८ लालसैरिव. ९ रिहाहमागतवान्.

अन्यच्च । मन्ये च ।

परिम्लानच्छायाविरहितसनिद्रद्रुमवनं
पतत्पङ्क्तीभूतध्वनितशकुनोन्नादितनभः ।
वियोगव्याकूतादुपनदि रुदच्चक्रमिथुनं
विषीदन्त्यां देव्यामिदमपि विषण्णं जगदभूत् ॥ २५ ॥

इत्यभिधाय स्थिते पर्वतके तत्कालोचितमिममेवार्थं समर्थयन्नवसरपाठकः पपाठ ॥ क ॥

कन्यामन्यानुरक्तां कथममृतभुजो मानुषीं कामयन्ते
तन्वङ्गीः सस्मितास्याः स्मरविवशदृशो नाकनारीर्विहाय।
वक्तुं खेदादिवैतद्दिनपतिरधिकं व्रीडयैवावनम्रः
कोपेनेवारुणांशुः प्रविशति वरुणस्यालयं पश्चिमाब्धिम् २६

राजा तु तदाकर्णयन्, अवतीर्य सौधशिखरतलाल्लीलापदप्रचारेण संध्यावन्दनविधिविरामोपविष्टजपद्विजजनसनाथसैकते सरित्संगमे संध्याह्निकमकरोत् ॥ ख ॥

ततश्च पश्चिमायां दिशि स्फुरति संध्यारागे, रुधिरासवपिपासया कालवेतालमण्डलीव प्रधावमाना, त्रिभिः स्रोतोभिः प्रवृत्तया गङ्गया सह संहर्षादिवानेकैः स्रोतसां सहस्रैर्गगनतलमिव प्लावयन्ती कालिन्दीव, व्यजृम्भत तिमिरपटलपङ्क्तिः ॥ ग ॥

अनन्तरं च चन्द्रमसा गर्भिणी पौरंदरी दिक्केतकीपुष्पपत्रपाण्डिमानमगमत् ॥ घ ॥

कन्यामन्येति ॥ "वक्तुं खेदाद्" इत्यस्योपयोगि "वरुणस्यालयम्" इति । वाचो हि श्रोतारमपेक्षन्ते ॥ २६ ॥

अनन्तरमिति ॥ गर्भिणी हि केतकपत्रवत्पाण्डुतां धत्ते ॥ घ ॥

---

१ व्याघाता. २ णाङ्कः. ३ विधीति क्वचिन्न. ४ नृपद्विज. ५ मगात्.

उल्ललास च चण्डतरमारुतान्दोलितोदयाद्रिद्रुमकुसुमकिंजल्करेणुराजिरिव कपिशा शशाङ्कद्युतिः ॥ क ॥

अथ क्रमेण पूर्वपयोधिपुलिनाद्राजहंस इव गगनमन्दाकिनीमुच्चलितः, केसरिकिशोर इवोदयगिरिगुहागह्वरात्तिमिरकरियूथपपृष्ठलग्नः, स्फटिकमयः पूर्णकुम्भ इव जगद्विजयप्रस्थानस्थितस्य मङ्गलाय मकरकेतोः केनापि सज्जीकृतः, श्रीखण्डपिण्ड इव मण्डनाय मेहेन्द्रदिशा हस्तश्लेषोपलालितः, शङ्खिकापुष्पस्तबक इव गगनश्रिया श्रवणे संयोजितः, कुम्भ इवैकः प्राचीवनविहारिसुरकरीन्द्रस्य प्रकटतां गतः, वासरविरामवल्लीमुच्छ्रय कन्द इवोद्धृतो निशाशबरिकया, पाण्डुपुष्पाक्षतगुञ्जापुञ्ज इव सिद्धवधूभिरुदयाचलचतुष्पथे विरचितः, गण्डशैल इव कैलासशिखराल्लुठित्वागतः, सीमन्तमौक्तिकमिव पूर्वदिङ्मुखस्य, सितातपत्रमिव पूर्वाशाधिपतेः पुरंदरस्य, क्रीडामौक्तिककन्दुक इव कालकुमारस्य क्षीरडिण्डीरपिण्डसदृशो दृष्टिपथमवततार तारापतिः ॥ ख ॥

तदनु च

मदनमिति युवानं यौवराज्येऽभिषिञ्च-
न्कृतकुमुदविकासो भासयन्दिङ्मुखानि।
इमममृततरङ्गैः प्लावयञ्जीवलोकं
गगनमवजगाहे मन्दमन्दं मृगाङ्कः ॥ २७ ॥

**अथेति** ॥ वनगहने हि विचरतः करिणः प्रायेणैक एव कुम्भस्थलविभागो लक्ष्यते। पाण्डुगुञ्जा हि मङ्गलाय स्युः। उदयाचलशब्दश्रुतेः सोमागमनसूचा ॥ क्रीडार्थं मौक्तिककन्दुकः ॥ ख ॥

**मदनेति** ॥ यौवराज्याभिषेकाद्यनेककार्यव्यग्रतया मन्दमन्दावगाहः ॥ २७ ॥

---

१ प्रचण्ड. २ यूथशङ्कया. ३ माहेन्द्रदिशा. ४ पुष्प इव. ५ गच्छतः. ६ चलचलच्चतुः. ७ द्दा.

तदनन्तरम्, आप्लावितमिव मुक्तमर्यादेन दुग्धवार्धिना, सिक्त[1]-भूभागाङ्गणमिवामन्दचन्दनाम्बुच्छटाभिः, विलिप्तदिग्भित्तिकमिव [2]सान्द्रसुधापङ्कपिण्डितैः, पूरितमिवोत्सर्पिकर्पूरपांसुवृष्ट्या, प्रविष्टमिव [3]स्फाटिकमणिमहामन्दिरोदरदरीम्[4], उत्प्लवमानमिव द्रवीभूततुहिनाचलमहाप्लवेन[5], भुवनमासीत् ॥ क ॥

ततश्च ।

कैलासायितमद्रिभिर्विटपिभिः श्वेतातपत्रायितं
मृत्पङ्केन[6] दधीयितं जलनिधौ दुग्धायितं वारिभिः ।
मुक्ताहारलतायितं व्रततिभिः शङ्खायितं श्रीफलैः
श्वेतद्वीपजनायितं जनपदैर्जाते शशाङ्कोदये ॥ २८ ॥

अपिच ।

सर्वेऽपि पक्षिणो हंसाः सर्वेऽप्यैरावता गजाः ।
जाताश्चन्द्रांशुभिः सर्वे रौप्यपुञ्जाः शिलोच्चयाः ॥ २९ ॥

अपिच ।

सुधापङ्कोपलिप्तेव बद्धेव स्फटिकोपलैः ।
विलीनहिमदिग्धेव मेदिनी ज्योत्स्नया कृता ॥ ३० ॥

अपिच ।

सौधस्कन्धतलानि दीपपटलैः कम्पेन पाण्डुध्वजा
हंसाः पक्ष[7]विधूननेन मृदुना निद्रान्तनादेन च ।
लक्ष्यन्ते कुमुदानि षट्पदरुतैरुत्सर्पिगन्धेन च
क्षुभ्यत्क्षीरपयोधि[8]पूरसदृशे जाते शशाङ्कोदये ॥ ३१ ॥

तथाविधे च चन्द्रोदयप्रपञ्चे हठादुत्कण्ठयाभिभूयमानो निषधनाथश्चिन्तयांचकार ॥ ख ॥

---

१ संसिक्त. २ सारं. ३ स्फटिक. ४ दरीषु. ५ सप्तम्यन्तम्. ६ मृत्पिण्डेन. ७ पक्षतिधून. ८ क्षारपयोधि.

" इतश्चन्द्रः सान्द्रान्किरति किरणानग्निपरुषा-
नितोऽपि प्रोन्मीलत्कुमुदवनवायुर्विलसति।
इतः कादम्बानां ध्वनितमपि निद्रालसदृशा-
मसह्यः सर्वोऽयं मनसिजमहिम्नः परिकरः ॥ ३२ ॥

अपि च।

इतो मकरकेतनः किरति दुर्निवारः शरा-
नितोऽपि वयमाकुलाः कुलिशपाणिदत्ताज्ञया।
तदेतदतिसंकटं यदिह कैश्चिदुक्तं जनै-
रितो[1] विषमदुस्तटी भयमितो महाव्याघ्रतः ॥ ३३ ॥

तदिदानीं किमिह कर्तव्यम्, कथं वा हास्येनाप्यवन्ध्यवचसामलङ्घनीयः खल्वादेशो लोकपालानाम् " इति चिन्तयन्नेकाकी पद्भ्यामेव विनिर्गत्य निजनिकेतनात्समन्तादापतद्भिः शशाङ्ककिरणजालैः[2] परिजनैरिव परिदर्शितवर्त्मा कैश्चित्कालल[3]वैः कैलासकूटायमानाट्टालकाभोगभव्यं भीमभूपालभवनमवाप्य कन्यान्तःपुरं पुरंदरवरप्रदानाद[4]दृश्यमानरूपः प्रासादपालकैः प्रविवेश ॥ क ॥

प्रविश्य च दूरादभिमुखागतेनानवरतदह्यमानकृष्णागुरुधूपधूमवर्तिनर्तकेन बहलयक्षकर्दमाम्बुसिक्तसौधस्कन्धसंधिसंचारिणा गन्धवाहेन कृताभ्युत्थान इव, परिक्रम्य स्तोकमन्तरम् " इत इतो देवी वर्तते " इति गीतगोष्ठीस्थितसखीगीतझंकारेणाहूयमान इव, यत्रास्ते दमयन्ती तत्सौधपृष्ठमारूढवान् ॥ ख ॥

प्रविश्य चेति ॥ कर्पूरकस्तूरिकादीनां क्षोदो यक्षकर्दमः ॥ ख ॥

---

१ इतोऽपि विषमा तटी भ. इतो विषमदुस्तटीतटमि. २ किरणप्रभाजा. ३ कुत्रचिन्नास्ति. ४ प्रदानप्रभावाद.

आरुह्य च मनाग्व्यवहितोऽनुपलक्ष्यमाण इव, वेणुवीणाक्वणानुसारिणा कोमलकाकलीप्रायेण किंनरीप्रमुखसखीनां गीतेन विनोद्यमानाम्, अलकवल्लरीमध्यनिवेशिततारानुकारिमौक्तिकेन[1] कज्जलकलङ्कितनयनोत्पलपक्ष्मपालिना मुखेन सचन्द्रगगनस्पर्द्धया भूतलमपि पूर्णोदितेन्दुमण्डलमिवापादयन्तीम्, उच्चकुचमण्डलविलोलया सस्मरसप्तर्षिग्रहगणपङ्क्त्येव हारलतया कृतकण्ठकन्दलाश्लेषाम्, ईषत्कपोलपालिं परामृशता चाटुकारेण वसन्तसमयप्रहितदूतेनेव कर्णलग्नेन कुसुममञ्जरीद्वितीयेन बालपल्लवेन विराजितवदनाम्, अच्छाच्छैः कस्तूरिकापङ्कपत्त्रभङ्गैर्भुजंगैरिव लावण्यामृतरक्षागतैरलंकृतभव्यभुजशिखराम्, आसन्नभुवि विकीर्णैः पाण्डुपुष्पप्रकरैर्गगनादवतीर्य रूपालोकनकुतूहलिभिर्नक्षत्रैरिव परिवृताम्, ऊरुनितम्बमण्डलस्पर्शसुखलम्पटतया[2] नीवीप्रान्तपुञ्जिततरङ्गं क्षीरोदमिव वस्त्रतां गतमच्छपाण्डु नेत्रपट्टं परिदधानाम्, 'अहमेव त्वया स्वयंवरे वरणीयः' इत्यर्थितया पादलग्नेन शेषोरगेणेव रौप्यनूपुरवलयेन विराजितवामचरणपल्लवाम्, विविधविलासवर्तिकाभिरिवाकारिताम्, अमृतद्रववर्णकैरिव चित्रितावयवाम्, आनन्दकन्दलैरिव घटिताम्, मोहनमणिशिलायामिवोत्कीर्णाम्, शृङ्गारदारुणीवोत्कुट्टिताम्[3], वशीकरणपरमाणुभिरिव विनिर्मिताम्, मदनमृत्पिण्डेनेव[4] निष्पादिताम्, वज्रलेपपुत्रिकामिव दृशोः, आकर्षणमणिशलाकामिव हृदयस्य, जीवनौषधिमिवानुरागस्य, जयपताकामिव मदनस्य[5], बहलचन्दनाम्बुच्छ-

**आरुह्य चेति** ॥ ईषत्कलोऽस्यास्तीति काकली । "निषादः काकलीसंज्ञो द्विश्रु-

१ मौक्तिके नवीनकज्ज. २ उरुनितं. गुरुनि. ३ वोत्कुट्टिताम्. ४ मदनमदमृत्पिण्डेन. मदनचन्दनकुङ्कुमहरिद्राम्. ५ शृङ्गारस्य.

टार्द्रितभुवि विकीर्णसुरभिपरिमलमिलन्मधुकररवानुमेयपाण्डुरपुष्पप्रकरे मसृणसितसुधाबन्धपिच्छले सौधस्कन्धे ज्योत्स्नामृतस्पर्शसुखमनुभवन्तीम्, अच्छांशुस्फटिकमणिपर्यङ्किकाङ्कभाजं दमयन्तीमलब्धनिद्रामद्राक्षीत् ॥ क ॥

तां चावलोक्य विचिन्तितवान्[1] ॥ ख ॥

"अहो स्थानेऽभिनिवेशो लोकपालानाम् । अशेषसुखनिधानाय को न स्पृहयति[2] ॥ ग ॥

मन्ये च ।

विस्फारिततारेक्षणैरिमामेव पश्यन्नयमाकाशः सग्रहोऽभूत् ॥ घ ॥

अयं च चन्द्रश्चन्दनपाण्डुभिः करैरिमामेव परामृशन्मदनानलदाहमयीं व्रणलेखां कलङ्कच्छलेन हृदयेनोद्वहति ॥ ङ ॥

अयमपि[3] समीपोद्यानमारुतोऽस्याः समर्पितकुसुमगन्धः शनैरुत्तरीयांशुकमाक्षिपन्मदनातुरस्तिर्यक् पतति ॥ च ॥

सर्वथा[4] जितं मनुष्यलोकेन, यत्रैवंविधमचिन्त्यम्, अनालोच-

त्युत्कर्षणाद्भवेत्" ॥ कज्जलेन कलङ्किता कलङ्क इवाचरितवती नयनोत्पलपक्ष्मपालिर्यत्र । कलङ्क इवाचरति स्मेत्याचारे क्विम्निष्ठे ॥ अच्छेति ॥ अमृतं हि भुजंगै रक्ष्यते॥ विविधविलासवर्तिकाश्चित्रकूर्चिकास्ताभिराकारितामालिखिताम् । आकारशब्दादाचारक्विबन्तान्निष्ठायां सिद्धम् ॥ क ॥

**विस्फारीति** ॥ तारा नक्षत्राणि कनीनिका च । ग्रहाः सूर्यादयो भूताद्यभिनिवेशाश्च ॥ घ ॥

**अयमपीति** ॥ अन्योऽपि स्मरातुरः कुसुमगन्धं कस्तूरिकादि चार्पयन्संव्यानाकर्षणपरस्तिर्यक्पतति ॥ च ॥

---

१ वानयम्. २ स्पृहयति भट्टरामेश्वरः. ३ अयमपि समीरणः समीपोद्यानागतोऽस्याः. ४ सर्वथा स्वर्लोकायितं म.

नगोचरम्, अप्रतिमरूपम्, अद्भुतम्, अमूल्यमुदपद्यत स्त्रीरत्नम् ॥ क ॥

आः । प्रजापते, परिणतशिल्पोऽसि । संसार, सनाथोऽसि । मदन, महोत्सववानसि । चक्षुः, कृतार्थमसि । हृदय, पूर्णमनोरथमसि । दूरागमनश्रम, सफलोऽसि ॥ ख ॥

सकलयुवजनमनोमधुकराकृष्टिकुसुमितलतिके निजनयननिर्जितराजीवे जीव चिरम् ॥ ग ॥

तथाहि ।

लक्ष्मीं बिभ्राणयोः कांचिच्चञ्चद्भ्रूभङ्गभागयोः[1] ।
बलिं यामो वयं तन्वि तवाब्जसदृशोर्दृशोः ॥ ३४ ॥

अपि च ।

किंनरवदनविनिर्गतपञ्चमगीतामृते श्रुतिं श्रयति ।
हरति हरिणीदृशो दृक् सालसवलिता च लुलिता च"॥ ३५॥

इत्यनेकविधानि[2] चिन्तयन्मृदुलीलापदैरागत्य गीतगोष्ठीस्थितस्य 'कोऽयम्' इति विस्मयविस्फारित[3]लोचनस्य संभ्रमवतः सखीकदम्बकस्य[4] मध्यमविशत् ॥ घ ॥

आः प्रजेति ॥ "संसार" इत्यादीनि प्रत्येकं संबोधनानि ॥ ख ॥

लक्ष्मीमिति ॥ हे तन्वि तव नेत्रयोर्वयं बलिं याम उपहारीभवाम इति परमप्रीतिगर्भा लोकोक्तिः। अब्जानि लक्ष्मीं बिभ्रति। तथा भ्रूरेव भङ्गस्तरङ्गः स भाग एकदेशो ययोः। यदा तु "चञ्चद्भ्रूभृङ्गसङ्गयोः" इति पाठः। तदा भ्रुवावेव भृङ्गौ तयोः सङ्गो यत्र ॥ ३४ ॥

किंनरेति ॥ यत एव हरिणीदृक्, अत एव गीतानुरागलक्षणं हरिणी हेवाकमनुसरति ॥ ३५ ॥

---

१ कृतश्रवणासङ्गयोः. २ इत्यनेकविधं. ३ विस्मयविस्मित. ४ सखीजनकद.

प्रविष्टे च तस्मिन्, आकस्मिकविस्मयेन विस्फारितानि, भयेन भ्रमितानि, कौतुकेनोत्तानितानि, व्रीडया वलितानि, मुदा मिलद्-राळपक्ष्माणि, स्मराकूतेन विलुलितानि[1], दिदृक्षारसेनानिमिषाणि, दृष्टिसंघट्टनेन मुकुलितानि, विलासेन मिलितानि, चिरं चक्षूंषि बिभ्राणाः किमपि चलितासनम्, उत्कम्पितहृदयम्, अपसरद्धैर्य-म्, अवगलत्स्वेदसलिलम्, उत्पुलकिताङ्गम्, अनङ्गभङ्गुरम्, अवलोकितान्योन्यमुखमवतस्थिरे तदभिमुखाः सख्यः ॥ क ॥

दमयन्त्यपि 'देवी, वर्धयामो वर्धयामः।कोऽपि कस्याश्चिज्जीविते-श्वरोऽयमत्रैवागतो दृश्यते' इति हर्षोत्कर्षगद्गदगिरां, गीतमुत्सृज्य ससंभ्रमोत्थितकुब्जवामनकन्यकानां मृदुकरतलतालिकाकलितक-लकलेन मनाग्विलासवलितमुखी तदभिमुखमवलोक्य शय्या-तला[2]दुदचलत् ॥ ख ॥

"आः कुतोऽस्यानेक[3]प्राकाररक्षकरक्षिते पक्षिणामपिदुष्प्रवेशे वि-शेषतो रजन्यां [4]कन्यान्तःपुरे प्रवेशः" इत्यद्भुतरसावेशास्तिमितेन किंचित्[5]संचारितेन चक्षुषा पुनःपुनर्नलमवलोक्य चिन्तयांचकार॥ग॥

"धन्या काप्युपराधिताद्रितनया यस्यास्त्वमाह्लादय-
न्मुक्ताहार इव प्रसारित[6]भुजः कण्ठे विलोठिष्यसि।
धातस्तात तवापि धन्यममुना सृष्टेन मन्ये श्रमं
मातर्मेदिनि वन्द्यसे किमपरं यस्यास्तवायं पतिः"॥३६॥

एवं चिन्तयन्त्येव तत्कालमाकूतकौतुकहर्षभयाद्यनेकरसपर-

धन्याकेति ॥ मातृशब्दं जननीपर्यायमपि स्त्रियः सपत्न्यादिष्वपि प्रणयसंबोधने प्रयुञ्जते इति नले भूपतावप्यर्थिन्या दमयन्त्या "मातर्मेदिनि" इति संबोधनं न दुष्टम्। अन्यथा सपत्नीं प्रति मातरित्यामन्त्रणमनुचितम् ॥ ३६ ॥

१ तानि चचि. २ तलाज्जवादुद. ३ अनेकप्रासादरक्षिणारक्षि. मकाररक्ष. ४ राजकन्या. ५ किंचित्साचिसं. ६ करः.

म्पराम्परावर्तितनयनोत्पला लज्जावनमितमुखी विधेयविवेकवैक-
ल्यमभजत ॥ क ॥

नलोऽपि "विहंगवागुरिके, भवत्स्वामिन्याः किमेवंविधः स-
माचारः, यदभ्यागतजनेन सह स्वागतालापमात्रेणापि न क्रिय-
ते व्यवहारः" इति तस्याः समीपवर्तिनीं पूर्वपरिचितां किंनरी-
मभाषत ॥ ख ॥

सापि ससंभ्रमप्रणामपूर्वमिदमवादीत् ॥ ग ॥

"किंचित्कम्पितपाणिकंकणरवैः पृष्टं ननु स्वागतं
व्रीडानम्रमुखाब्जया चरणयोर्न्यस्ते च नेत्रोत्पले ।
द्वारस्थस्तनयुग्ममङ्गलघटे दत्तः प्रवेशो हृदि
स्वामिन्किं न तवातिथेः समुचितं सख्याऽनयाऽनुष्ठितम् ॥ ३७ ॥

तदितः ससंभ्रमोत्थितयानया समर्पितमिदमुल्लसन्मणिपर्य-
ङ्किकापृष्ठमधितिष्ठतु देवः ॥ घ ॥

त्वमपि देवि, विद्रुममणिपर्यङ्किकामिमामदूरवर्तिनीमध्याः-
स्व ॥ ङ ॥

भवतु च भवतोः परमुखेन श्रुतान्योन्यस्वरूपयोरिदानीमात्मा-
नुभवेन नयननिर्वृतिः, फलन्तु मनोरथाः सखीनाम्" इति ॥ च ॥

तयाभिहितौ तौ सर्वसत्वरसखीकरपरामृष्टयोः स्फटिकप्रवा-
लपर्यङ्किकयोरुत्सङ्गभागं भेजतुः ॥ छ ॥

ततश्च तौ

हर्षाद्बाष्पचिते, भयात्तरलिते, विस्फारिते विस्मया,-
दौत्सुक्यात्स्तिमिते, स्मराद्विलुलिते, संकोचिते लज्जया ।
रूपालोकनकौतुकेन रभसादन्योन्यवक्त्राम्बुजे
किंचित्साचि च संमुखं च नयने संचारयामासतुः ॥ ३८ ॥

तत्र च व्यतिकरे

अन्तः केवलमुल्लसन्ति न पुनर्वाचां तु ये गोचरा
येषां नो भरतादयोऽपि कवयः कर्तुं विवेकं क्षमाः।
लज्जामन्थरयोः परस्परमिलदृष्टिप्रपाते तयो-
स्ते सर्वे समकालमेव हृदये केऽप्याविरासन्[2]रसाः ॥ ३९ ॥

अपि च। तत्र च व्यतिकरे

कर्णान्तकृष्टवलयीकृतचापचक्र-
श्चञ्चद्गुणस्खलनजर्जरितप्रकोष्ठः।
लक्षद्वयेऽपि युगपद्विशिखान्विमुञ्च-
न्संधानसत्वरकरः श्रमवान् स्मरोऽभूत् ॥ ४० ॥

अनन्तरमाप्तसखीवचनेन स्वयमर्घदानोद्यतां ताम् "अलमल-मुत्पलाक्षि, प्रयासेन। न खल्वसि पात्रं परिश्रमस्य। न पारिजात-मञ्जरी जरठपवनप्रेङ्खोलनायासं सहते" इति दमयन्तीमभिधाय तस्याः स्वादुदुर्लभसूक्तिसुधासेककोमलालापपण्डिताभिः सखीभिः सह परिमितपरिहासेन, किमपि जल्पन्, किमपि हसन्, किमपि हासयन्, मुहूर्तमिवासांचक्रे ॥ क ॥

चिन्तितवांश्च।

लीलाताण्डवितभ्रुवोः स्मरभरभ्रान्तोल्लसत्तारयो-
[1]रन्तर्मौक्तिकमालिकाधवलयोर्मुग्धस्मितस्मेरयोः।
किंचित्साचिदृशोः कृतानिलचलन्नीलोत्पलस्पर्धयो-
रुल्लोलैरिव याति पक्ष्मलदृशः कान्तिर्मदीये मुखे ॥ ४१ ॥

लीलेति ॥ उल्लोलैर्याति तरङ्गैः स्फुरति ॥ ४१ ॥

१ विनोदं. २ रासू रसाः.

अपि च ।

वरमुकुलितनेत्रप्रान्तपर्यस्ततारं
तव तरुणि सलज्जं सस्मितं सस्मरं च ।
क्षणमभिमुखवक्त्रे विस्मयस्मेरदृष्टौ
मयि वलति वलक्षं वीक्षितं मा निरोत्सीः ॥ ४२ ॥

किंचान्यदपरमिदमाशास्महे ।

लावण्यामृतदीर्घिका कुलगृहं सौभाग्यसौन्दर्ययो-
स्त्रैलोक्याकररत्नकन्दलिरियं जीव्यात्सहस्रं समाः ।
लोकालोकनकौतुकाय बहुना शिल्पश्रमेणादरा-
न्मन्ये यां विधिना विधाय विहितं सृष्टेर्ध्वजारोपणम् ॥ ४३ ॥

अहो आश्चर्यम् ।

रङ्गत्यङ्गे कुरङ्गाक्ष्याश्चक्षुर्मे यत्र यत्र तु ।
दृश्यते तत्र तत्रैव वलद्बाणकरः स्मरः ॥ ४४ ॥

तत्कथमियमन्यार्थे प्रार्थ्यते । तदह्यतामयं परप्रेष्यभावः ॥क॥ यतः । तिरयति स्वातन्त्र्यसुखम्, अभिमुखयति पारवश्यक्लेशम्, आमन्त्रयति तिरस्कारम्, आदरयति दैन्यम्, आव्हयति ल-

दरेति ॥ तवाभिमुखवक्त्रे मयि एवं गुणविशिष्टं वीक्षितं वलक्षं धवलं मा निरोत्सीः ॥ ४२
लावण्येति ॥ आलोकनाय कौतुकमालोकनकौतुकम् । लोकस्यालोकनकौतुकम् । तेन पश्यतु लोको, द्रष्टव्यदर्शनाद्दृष्टिफलमाप्नोत्वित्यर्थः ॥ ४३ ॥
रङ्गेति ॥ तुः पुनरर्थे । किं पुनः यत्र यत्राङ्गे चक्षू रङ्गति तस्य साधिष्ठानत्वात् । स्मरबाणबाधा प्राप्यते ॥ ४४ ॥
तत्कथमिति ॥ अन्येषामिन्द्रादीनामर्थेऽन्यार्थे ॥
यत इति ॥ आङ्पूर्वस्य वहतेः करोत्यर्थत्वादावाहयति कारयतीत्यर्थः ॥

---

१ निरोधीः; विरोधीः. २ सौन्दर्यसौभाग्ययोः. ३ विहाय. ४ हि. ५ वलगनुबाण; चलद्बाण. ६ तत्किमिय; अथं कथमियमन्यथाप्रा. ७ मुखरयति पार; अतिमुखरय.

धिमानम्, आवाहयति[1] हास्यपदम्, समानयत्यौ[2]चित्यभङ्गम्, अङ्गीकारयति कार्पण्यम्, अपहस्तयति वस्तुभावम्[3], पुरुषस्य ॥ क ॥

तथा हि ।

सोच्छ्वासं मरणं निरग्नि दहनं निःशृङ्खलं बन्धनं
निष्पङ्कं मलिनं[4] विनैव नरकं सैषा महायातना ।
सेवासंजनितं जनस्य सुधियो धिक्पारवश्यं यतः
पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम् ॥ ४५ ॥

किं चान्यत् ।

प्रस्तुतस्य विरोधेन ग्राम्यः सर्वोऽप्युपक्रमः ।
वीणायां वाद्यमानायां वेदोद्गारो न रोचते ॥ ४६ ॥

तत्किमिदानीमिदमुच्यते । "लोलाक्षि, लोकपालास्त्वामस्मन्मुखेन वृण्वन्ति इति प्रस्तुतानुरागभङ्गः, तदादेशोऽपह्नूयते[5] स्वामिन्यन्यथा कथ्यते[6] श्रेयःस्खलनम्[7], यथावृत्तमेवाख्यायते[8] स्वार्थहानिः, तद्वरमस्तु स्वार्थविघातो न तु विश्वस्तदेवतावञ्चनापातकम्[9]" इति चिन्तयन्नशेषमपि तस्यै पुरंदरादेशं[10] सप्रपञ्चमाचचक्षे ॥ ख ॥

सापि[11] स्तोकस्मितस्निग्धनम्रमुखी[12] "हं हे प्रियंवदिके, प्रियास्मजीवितयाम्बया तातेन[13] च मध्याह्ने समाहूय किमुक्तासि, किं शिक्षितासि । न नाम बालेयम्, अविनीतेयम्, आग्रहग्रहग्रस्तेयम्[14], इति केनापि कर्णेजपेन तातस्य हृदयाद्दूरीकृताहम्[15] । वन्द्याः खलु गुरवो

प्रस्तुतेति ॥ उभयानुरागौचित्यादात्मार्थस्य प्रस्तुतत्वम् ॥ ४६ ॥
सापीति ॥ स्तोकेत्यादिना अर्थिनोऽपि लोकपालान्प्रत्यवज्ञा, नलं प्रत्यनुरागा-

---

१ आरोहयति प्रतिदास्यपदम्. २ आनयति. ३ पुरुषभावम्. ४ गलनं; नलिनं. ५ अपधीयते. ६ कथ्याने. ७ श्रेयःसंवलनम्. ८ यथावृत्तमाख्या. ९ वञ्चनपात. १० देशमपञ्चमा. ११ ततः सापि; सोऽपि. १२ स्तोकस्मितमुग्धनम्र; स्तोकस्मितस्निग्धमुग्धनेत्रमुखी; स्निग्धमुखनम्र. १३ कुप्यता तातेन च. १४ आग्रहग्रस्ते; आग्रहग्रस्तैवेयम्. १५ अहमिति; अहमपि.

देवाश्च बिभेमि तेभ्योऽहम्" इति। प्रियंवदिकाख्यया सख्या सार्धमन्यालापमकरोत्[1] ॥ क ॥

नलोऽपि "मदिराक्षि, मदयति मदिरा, तरलयति तारुण्यम्, अन्धयति धनम्, उत्पथयति मन्मथः, विरूपयति रूपाभिमानः, खर्वयति गर्वः। सर्वजनप्रसिद्धमेतत्[2]। किं तु त्वमिदमसत्यतां मा नैषीः[3]। व्यभिचरतु[4] तवाङ्गे सर्वमेतत्। नहि शशिनि वह्निः, अमृते च विषाङ्कुरः संभवति। तदिमं[5] देवादेशं मावज्ञासीः। सर्वथा प्रभवन्ति प्राणिनाममी लोकपालाः। तत्रापि विशेषतः सकलत्रिदशाधिपतिरशेषसुरकिरीटमणिमयूखमालार्चितचरणारविन्दः पुरंदरो देवः। तद्वृणु[6] कमप्यमीषाममृतभुजां मध्ये। मानय स्वर्गसुखानि। अभूमिरसि मर्त्यलोकस्तोकसुखानाम्" इति पुनस्तामभ्यधात् ॥ ख

एवं विधे च व्यतिकरे दमयन्त्या पुनरुक्तमिमं जल्पमरण्यकरिण्येवारुंतुदमङ्कुशमसहमानया मनाक्तरलिते शिरसि, स्तोकीकृते मनसि, मुक्ते निःसहनिःश्वासमरुति, परावर्तिते चक्षुषि, विवर्णतामानीते वदनारविन्दे, प्रस्तावपण्डिता प्रियंवदिका प्राह ॥ ग ॥

"देव, श्रुतं श्रोतव्यम्, अवधारितो देवादेशः। किं तु न स्वतन्त्रेयम्, ईश्वरेच्छया प्रवृत्तिनिवृत्तयो यतः प्राणिनाम्, अनालोचनगोचरश्चायमनुरागोऽङ्गनाजनस्य ॥ घ ॥

तथा हि।

तीव्रतपनतापप्रियाम्भोजिनी न सहते स्तोकमप्यमृतमुचो रुचश्चन्द्रस्य, परिम्लायति मालतीमालिका सलिलसेकेन ॥ ङ ॥

अहं चान्यालापव्याजेन दमयन्ती प्रतिपादितवती। न नामेति वितर्के। "किं दूरीकृताहम्" इति वितर्कः ॥ क ॥

---

१ मन्योन्यालापलीलामकरोत्. २ इति. ३ मनैषीः. ४ व्यभिचरति. ५ तमिमं. ६ वृणुष्व.

प्रसिद्धं चैतत् ।

भवति हृदयहारी क्वापि कस्यापि कश्चि-
न्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।
किसलयति वनान्ते कोकिलालापरम्ये
विकसति न वसन्ते मालती कोऽत्र हेतुः ॥ ४७ ॥

एवमनेकविधोपाख्याननिपुणया तत्कालोचितम्, अनुच्चस्मितसुधास्निग्धम्, अविरुद्धम्, परिमितपरिहाससुन्दरम्, अनुवृत्तिबृंहितानुरागम्, उचितचाटुचटुलम्, अशाठ्यम्, अकठोरम्, अनुज्झितप्रियम्, प्रियंवदिकया सहाल्पाल्पं जल्पन् "अयुक्तमिह कन्यान्तःपुरे चिरं स्थातुम्" इति चिन्तयन्नापृच्छ्य दमयन्तीं नलः पर्यङ्किकापृष्ठादुदतिष्ठत् ॥ क ॥

प्रथमोत्थितया च तया लज्जावनम्रवदनारविन्दया सह सखीकदम्बकेन द्वित्राणि पदान्यनुगम्यमानो विहसन् "अलमलमायासेन, स्थीयतां सुखम्" इत्यभिधाय स्वगृहानयासीत् ॥ ख ॥

गत्वा च शिरीषकुसुमदाममृदुनि शय्यातले निषण्णश्चिन्तयांचकार ॥ ग ॥

हर्षादुत्पलकं विकासि रभसादुत्तानितं कौतुका-
च्छृङ्गारादलसं, भयात्तरलदृङ् नम्रं च लज्जाभरात् ।
तस्यास्तन्नवसंगमे मृगदृशो दृश्येत भूयोऽपि किं
किंचित्काञ्चनगौरगण्डगलितस्वेदाम्बुरम्यं मुखम् ॥४८॥

---

१ प्रयोगी; प्राप्तबन्धप्रयोगी. २ चित्तभुवा. स्निग्धम्. ३ परिमितं. ४ असाध्यकठोरम्. ५ पर्यङ्किकातलादुद. ६ विरहातुरामलमलंप्रया.

अपिच ।

अपसरति न चक्षुषो[1] मृगाक्षी
रजनिरियं च न याति नैति निद्रा ।
प्रहरति मदनोऽपि दुःखितानां
बत बहुशोऽभिमुखीभवन्त्यपायाः ॥ ४९ ॥

इति विविधवितर्कावेशविध्वस्तनिद्रः
सजलजडिम मीलत्पक्ष्म चक्षुर्दधानः ।
हरचरणसरोजद्वन्द्वमाधाय चित्ते
नृपतिरपि[2] विदग्धः स त्रियामामनैषीत् ॥ ५० ॥

इति श्रीत्रिविक्रमभट्टविरचितायां दमयन्तीकथायां हरचरणसरोजाङ्कायां सप्तम उच्छ्वासः समाप्तः ॥ ग्रन्थोऽपि समाप्तः ॥

इति विषमपदप्रकाशमेतं दमयन्त्यास्तनुते स्म चण्डपालः ।
शिशुमतिलतिकाविकासचैत्रं चतुरमतिस्फुटभित्तिचारुचित्रम् ॥
श्रीप्राग्वाटकुलाब्धिवृद्धिशशभृच्छ्रीमान् यशोराज इ-
त्यार्यो यस्य पिता प्रबन्धसुकविः श्रीचण्डसिंहोऽग्रजः ।
श्रीसारस्वतसिद्धये गुरुरपि श्रीलूणिगः शुद्धधीः
सोऽकार्षीद्दमयन्त्युदारविवृतिं श्रीचण्डपालः कृती ॥

इति श्रीचण्डपालविरचिते दमयन्तीविवरणे सप्तम उच्छ्वासः समाप्तः ॥

---

१ चक्षुषः. २ नृपतिरयमसङ्गीतां त्रि०.

## दमयन्तीकथास्थश्लोकानामकारादिक्रमेणानुक्रमणिका।


| मूलानि. | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|
| अंसस्रंसिजलार्द्र— | ५ | ३७ |
| अक्षमालापवृत्तिज्ञा | १ | ७ |
| अखण्डितप्रभावोऽथ | २ | ३१ |
| अगाधान्तःपरिस्पन्दम् | १ | ३ |
| अग्रस्थामिव चेतसः | ७ | १५ |
| अङ्गाः कङ्ककलिङ्ग— | ७ | ६ |
| अच्छाच्छैः शुकपिच्छ— | १ | ४६ |
| अजनि जनित— | १ | ५० |
| अजनि रजनिः | ६ | ३५ |
| अतिललिततरं | ४ | ५ |
| अत्रान्तरे तरणि— | ३ | ३ |
| अत्रिजातस्य या | १ | ९ |
| अथ कथमपि नाथं | १ | ५१ |
| अथ नरपतिदत्ते | ३ | ८ |
| अथ विमलदुकूल— | ३ | २१ |
| अंद्य मे सुबहोः | ३ | १२ |
| अद्यास्मत्कुलसंततिः | ७ | १ |
| अनुगुणघटनेन | ७ | ५ |
| अनुभवतु चिराय | ५ | २८ |
| अनेकधा यः किल— | २ | २० |
| अन्तः केवल | ७ | ३९ |
| अपसरति न चक्षुषो | ७ | ४९ |
| अपसृत्याम्बुतरङ्ग— | ६ | ७४ |
| अपहस्तितान्तच्छाया— | ५ | ५६ |
| अप्रगल्भाः पदन्यासे | १ | ६ |
| अपि रेणुकृतक्रीडं | ३ | २७ |
| अब्जश्रीसुभगं | १ | ५३ |
| अभिलषति नाल— | ५ | ७ |
| अमन्दानन्दनिष्पन्द— | ३ | २५ |
| अयं हि प्रथमो रागः | ६ | ४६ |
| अयि भवत कृतार्थाः | ६ | ८० |
| अरुणमणिकिरण— | ६ | १९ |
| अलंकृतनिशान्तेन | ४ | १२ |
| अवतरति घृताची— | ५ | ५१ |
| अविरतमिदमम्भः | ५ | ६१ |
| अवृष्टिनष्टधूलीक— | ४ | १३ |
| असमहरिततीरं | ५ | ९ |
| अस्ति स्वर्गसमः | १ | ५४ |
| अस्तु स्वस्ति समस्त— | १ | ५५ |
| अहीनां मालिकां | ४ | १९ |
| आकर्ण्य स्मरयौवराज्य— | १ | ४० |
| आकारः स मनोहरः | १ | ५८ |
| आज्यं प्राज्यमभिन्न— | ७ | ११ |
| आज्यप्राज्यपरान्न— | ७ | १२ |
| आनन्ददायिनस्ते | ६ | ४२ |
| आनन्दिसुन्दर— | ५ | १२ |
| आ पूर्वापर— | ७ | ४ |
| आबध्नत्परिवेष— | ३ | ३२ |
| आ ब्रह्मावधि | ७ | २ |
| आरुह्यैताः शिखरि— | ६ | ६७ |
| आवासाः कुसुमा— | ६ | ६१ |
| आविर्भूतविषा— | ५ | १६ |
| आसीत्पिण्डित— | ५ | ३१ |
| आसेतोः कापिकी— | ७ | ३ |
| आस्यश्रीः संनिभे— | ४ | १६ |
| आहूतोदीच्यभूपेन | ५ | २४ |
| आह्लादयन्ति मृदवो | ५ | ६८ |
| आह्लादयन्ति सौख्याम्भः | २ | २४ |
| इतश्चन्द्रः सान्द्रा— | ७ | ३२ |
| इति जनितमुदिन्दोः | २ | ३९ |

| मूलानि. | उच्छ्वासः | श्लोकसंख्या | मूलानि. | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|---|---|---|
| इति विविधमुदश्च— | ६ | ४७ | एतस्याः सलिलाव— | ६ | १६ |
| इति विविधवितर्का— | ७ | ५० | एताः प्राप्य परोपकार— | ४ | २१ |
| इतो मकरकेतनः | ७ | ३३ | एताः सान्द्रद्रुमतल— | ४ | ४ |
| इत्थं काव्यकथा | १ | १५ | एतास्ताः परिपक्क— | ६ | ७१ |
| इदं गोदावर्या— | ४ | २५ | एषा मे हृदयं जीव | २ | २१ |
| इदं मन्दाकिन्या | ४ | २४ | एषा सा विन्ध्यमध्य— | ५ | ३५ |
| इदं राज्यमियं | ३ | १३ | कंदर्पस्य जगज्जैत्र— | ४ | ६ |
| इन्दोः सौन्दर्य— | १ | ५७ | कः करोति गुणवा— | ५ | १४ |
| इष्ट्वा क्रतून्युग— | ५ | ५४ | कदा किल भविष्य— | ६ | २१ |
| इह कवलितकन्दं | २ | ११ | कन्यामन्यानुरक्तां | ७ | २६ |
| इह चरति चकोरः | ५ | ७३ | कर्णमूलविषये | ५ | ६२ |
| इह पुनरनिशं | २ | १२ | कर्णान्तकृष्टवल्ली— | ७ | ४० |
| इह भवतु निवासः | ६ | ७३ | कर्णान्तविभ्रमभ्रान्त— | १ | १३ |
| ईषन्निःसृतकुन्द— | ७ | २४ | कर्पूराम्बुनिषेक— | ५ | २१ |
| उचितमुचित— | ४ | २२ | का नाम तत्र चिन्ता | ७ | ७ |
| उच्चैः कुम्भः कपिश— | ६ | ६० | कालमिव कलाबहुलं | ६ | ३७ |
| उच्चैः शाखाग्रसंलग्ना | ७ | ४७ | काव्यस्याम्रफलस्येव | १ | १७ |
| उज्ज्वलसुवर्णपदक | ६ | ४१ | किं कर्पूरकणाः | २ | ३८ |
| उड्डीय वाञ्छितं | ५ | ४ | किं कवेस्तेन काव्येन | १ | ५ |
| उत्कम्पाद्गलितां— | ६ | ६९ | किंचित्कम्पितपाणि | ७ | ३७ |
| उत्फुल्लगल्लै— | १ | २३ | किं तेन जातु जातेन | ४ | १९ |
| उदयगिरिगतायां | ६ | १ | किंनरवदनविनि— | ७ | ३५ |
| उदात्तनायकोपेता | १ | २५ | किं लक्ष्मीः स्वयमागता— | १ | ५६ |
| उन्मादिनी मद— | ५ | १० | किं स्यादञ्जनपर्वतः | १ | ४४ |
| उन्मादि यौवन— | ५ | ६५ | किमपि परिजनेन | ४ | ३२ |
| उपकर्तुं प्रियं वक्तुं | ३ | १४ | किमश्वः पार्श्वेषु | १ | ४९ |
| उपनदि पुलिने | ५ | ६९ | किमु कुवलयनेत्राः | ५ | ५० |
| उपनयति करे | ६ | ५९ | कुन्दे सुन्दरि | ७ | ९ |
| उपरम रमणीया— | ६ | ५४ | कुररभरसहं | ५ | ४० |
| उपरि परिमलान्धैः | ४ | २३ | कुरुते नालकव— | ५ | ६ |
| एकान्ते सेवते योगं | २ | १८ | कूजत्क्रौञ्चं चटुल— | ६ | २५ |
| एतस्याः करिकुम्भ— | ५ | ५९ | कृतक्रीडाः क्रोडै— | ५ | ४८ |

| मूलानि | उच्छ्वासः | श्लोकसंख्या | मूलानि | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|---|---|---|
| कृत्वातिथ्यक्रियां | ३ | १० | तत्तस्याः कमनी— | ३ | ३१ |
| केनापि व्यवहारेण | ५ | २३ | तत्तातस्य कृतादरस्य | ४ | ३१ |
| कैलासायितमद्रिभिः | ७ | २८ | तथा भव यथा तात | ४ | १७ |
| कोष्णं किं नु निषिच्यते | ४ | ९ | तदेतत्पुण्यानां | ४ | २६ |
| क्वचिच्चटुल— | ५ | ४४ | तद्वातामृतपानार्थि— | ४ | २ |
| क्वचित्प्रवरगैरिका | ५ | ४३ | तया दत्ता मया नीता | ५ | १३ |
| क्वचिदीप कार्यारम्भे | ५ | ५५ | तव सुभग रम्यदशया | ६ | ४० |
| क्षुभ्यत्क्षीरसमुद्र— | २ | ३४ | तव सुहृदुपभुक्त— | ६ | १२ |
| गीतेर्ग्रामाः किल द्वित्राः | ६ | ५२ | तस्मिन्स्मितमुखे | १ | ५९ |
| गौरवं गौरवंशस्य | २ | १० | तस्य विषयस्य मध्ये | १ | २९ |
| ग्रीवालम्बित— | ५ | ५८ | तस्याः कान्तिनिरुद्ध— | २ | ३० |
| चक्रधरं विषमाक्षं | ६ | ३२ | ता एव निर्वृतिस्थान— | २ | २६ |
| चार्वी सदा सदाचार | १ | ३३ | तात तावन्ममा— | ५ | ३ |
| चिरविरचितचाटु— | ५ | ७२ | तास्तास्तं स्नपयामासु— | ३ | २० |
| जननीति मुदित— | १ | ३० | तुभ्यं नमो नमश्श्लोक— | ३ | १ |
| जनयति जलबुद्धिं | २ | ९ | तेषां वंशे विशद— | १ | १९ |
| जयति गिरिसुतायाः | १ | १ | तैस्तैरात्मगुणै— | १ | २० |
| जयति जगदेकचक्षु— | ६ | ३१ | त्रिदिवपुरसमृद्धि— | १ | ३१ |
| जयति मधुसहायः | १ | २ | त्वत्तो भयेन | ६ | १३ |
| जयत्यखिललोक— | ६ | ८ | त्वद्देशागतमारुतेन | ६ | २३ |
| जयत्यमरसारथि— | ६ | ९ | त्वद्देशागतवायसाय | ६ | २२ |
| जयत्यमलकौस्तुभ— | ६ | ५ | दग्धो विधिर्विधत्ते | ७ | २१ |
| जयत्यमलभावना— | ६ | ११ | दत्त्वार्घमर्हणीयाय | ३ | ९ |
| जयत्यम्भोजिनीखण्ड— | ३ | ५ | दरमुकुलितनेत्र— | ७ | ४२ |
| जयत्यम्भोजिनीबन्धु— | ६ | ३ | दिशः प्रसेदुः | ४ | २८ |
| जयत्यसमसाहसः | ६ | १० | दिशि दिशि किमि— | ५ | ३३ |
| जयत्यसुरसुन्दरी— | ६ | ७ | दिष्ट्या दिवौकसां | ५ | ५३ |
| जयत्युदधिनिर्गत— | ६ | ४ | दूराभोगभरेण | ३ | ३४ |
| जयत्युदरनिःसर— | ६ | ६ | देवो दक्षिणदिङ्मुखस्य- | २ | २९ |
| जाताकस्मिकविस्मयैः | १ | ४८ | देशः पुण्यतमोद्देशः | १ | २८ |
| जातिर्यत्र न तत्र | ५ | ५७ | देशानां दक्षिणो देश— | २ | २८ |
| जानन्ति हि गुणा— | १ | १८ | देशो भवेत्कस्य न | २ | २७ |

| मूलानि | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|
| धन्याः शरदि सेवन्ते | २ | १ |
| धन्या काप्युपराधिता— | ७ | ३६ |
| धन्यास्ते दिवसाः | १ | ३४ |
| धीरं रङ्गन्त— | ५ | २९ |
| धुतकदम्ब— | १ | ४३ |
| धुतरजनि— | ६ | ५६ |
| नक्षत्रभूः क्षत्र— | १ | ३७ |
| न गम्यो मन्त्राणां | ७ | १७ |
| न तत्काव्यं न तन्नाट्यं | ३ | २८ |
| नद्यास्तीरे विदर्भाया | ५ | २७ |
| नमिताः फलभारेण | २ | २ |
| नलोऽपि मां | ६ | १९ |
| नास्तिसा नगरी यत्र | १ | २६ |
| निजप्रियमुखभ्रान्त्या | ५ | ६० |
| निखमुद्वहते | २ | ३३ |
| निपतति किल | ६ | २० |
| निर्मांसं मुखम— | १ | ४७ |
| निर्माय स्वयमेव | ४ | ७ |
| निश्चितं ससुरः | १ | १० |
| नीरं नीरजनिर्मुक्तं | १ | ४२ |
| नीरञ्जनपदे | २ | २९ |
| नृप चलसि | ६ | ६८ |
| नोद्याने न तरङ्गिणी | ७ | १६ |
| नो नेत्राञ्जलिना | १ | ६२ |
| पटलमलिकुलाना— | २ | ४ |
| पद्मान्यातपवारणानि | ५ | ७१ |
| परिम्लानच्छाया | ७ | २५ |
| परिहरति वयो | ३ | २९ |
| पर्णैः कर्णपुटायिते— | १ | ४१ |
| पर्वतभेदि पवित्रं | ६ | २९ |
| पश्यैताः करिकुम्भ— | ५ | ३८ |
| पाण्डुपङ्कजसंलीन— | २ | १४ |
| पीनोन्नमद्धन— | ६ | ६४ |
| पुनरपि तदभिज्ञा— | १ | ६४ |
| पूर्वापरपयोराशि— | ५ | ३० |
| पूर्वाह्णे विहितोदया | ५ | ७४ |
| पौष्पाः पञ्चशराः | ७ | १८ |
| प्रभासंयोगिविख्यात— | ३ | २४ |
| प्रसन्नाः कान्तिहारिण्यो | १ | ४ |
| प्रसरति रणरणकरसः | ६ | ४३ |
| प्रसृतकमलगन्धं | ५ | ८ |
| प्रस्तुतस्य विरोधेन | ७ | ४६ |
| प्रायः सैव भवे— | ४ | १ |
| प्रावृषं शरदं | २ | ३ |
| प्रियविरहाविषा— | ६ | ४५ |
| प्रेमप्रपञ्च | ५ | ११ |
| बककृतनिनदं | ५ | ४१ |
| बाणकरवीरदमनक— | २ | १७ |
| बालोन्मिल— | ५ | ३९ |
| बिभर्ति यो ह्यर्जुन— | ४ | १८ |
| बिभ्रते हारिणीं | ४ | ३२ |
| ब्रह्मण्योऽपि | १ | ३९ |
| भङ्गश्लेषकथाबन्धं | १ | २२ |
| भजत बलसमूहाः | ६ | ७५ |
| भवति यदि सहस्रं | ५ | १ |
| भवति हृदयहारी | ७ | ४७ |
| भवन्ति फाल्गुने | १ | २७ |
| भानोः सुता | ६ | १५ |
| भिन्दन्कन्द— | १ | ४५ |
| मुक्तान्ते घृत— | ७ | १३ |
| भूपालामन्त्रणे | ५ | २२ |
| भूमयो बहिरन्त— | १ | ३१ |
| भोगान्भो गाङ्गवीची— | ३ | २२ |
| भ्रमकरं | ५ | ६३ |

| मूलानि | उच्छ्वासः | श्लोकसंख्या | मूलानि | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|---|---|---|
| भ्राम्यद्भिरेकाणि | २ | ५ | रजनिमवनिनाथः | ५ | ७७ |
| भ्राम्यद्भृङ्गभरा— | ६ | ६२ | रसे रसायने | ४ | १४ |
| मज्जत्कुञ्जर— | ५ | ३६ | राजते राजतेनायं | २ | ८ |
| मण्डलीकृतकोदण्डः | ४ | ३ | राजन्राजीवपत्राक्ष | २ | २३ |
| मदनमतियुवानं | ७ | २७ | रूपसंपन्नमग्राम्यं | २ | २२ |
| मध्ये त्रिवली | ५ | ६७ | रोहणं सूक्तरत्नानां | १ | ८ |
| मन्दं मन्दरमन्दिरेषु | ५ | ३२ | लक्ष्मीं बिभ्राणयोः | ७ | ३४ |
| मन्दायते दिनमिदं | ५ | ६४ | लब्धार्धचन्द्र ईशः | ६ | ३८ |
| महावराहाङ्गविनि— | ६ | ३० | ललाटपट्टविन्यस्त | ३ | ११ |
| माद्यद्दन्तिकपोल | ५ | ३४ | लावण्यपुण्यपरमाणु | ७ | २२ |
| माद्यन्मांसलतुङ्ग— | ५ | २५ | लावण्यातिशयः | ३ | ३३ |
| माल्यं मूर्धनि | ६ | ७० | लावण्यामृत— | ७ | ४३ |
| मिश्रं च मन्त्री च | १ | ३८ | लास्यं पांसुकणायते | ५ | २० |
| मुक्तादाममनोरथेन | २ | ३७ | लिप्तेवामृतपङ्केन | ५ | १९ |
| मुक्तास्तैः श्रूयमाणं | ६ | २७ | लीलया मण्डलीकृत्य | ४ | ३० |
| मुग्धस्निग्ध— | ३ | ६ | लीलाताण्डवितभ्रुवोः | ७ | ४१ |
| मुग्धा दुग्धधिया | २ | ३६ | वररजनीकरकान्ते | ३ | १९ |
| मुञ्चन्त्याः शिशुतां | ३ | ३० | वरसहकारकरञ्जक— | २ | १६ |
| मुहुरधिवसतां | ५ | ४१ | वर्धमानोल्लसद्रागा | ६ | ४८ |
| मृगेषु मैत्री | ६ | २८ | वल्लीवल्कापिनद्ध— | १ | ५२ |
| मृदुकरपरिरम्भा- | ६ | ५८ | वहति नवविकासो— | २ | १३ |
| यं श्रुत्वैव मनोभवा— | ७ | १० | वाचः काठिन्यमायान्ति | १ | १६ |
| यत्र न फलिता— | ६ | ६३ | वायुस्कन्धमवष्टभ्य | ५ | ७५ |
| यथा चित्तं तथा | ३ | १५ | वासरश्रीमहावल्ली— | ३ | ४ |
| यथेयमाकृति— | ५ | २६ | विकलयति कला— | ५ | ६६ |
| यद्यावद्यादृशं | ३ | १७ | विगलितविलास— | ७ | २३ |
| यद्येतस्याः सकृदपि | ६ | १७ | विचित्राः पत्राली | ६ | २४ |
| याः स्कन्दस्य जगाद | ४ | २७ | विपिनोद्देशं सरसं | ६ | ३४ |
| यात्यस्ताचलमन्ध— | ६ | २ | विभो विभूतिसंपन्न | ३ | २ |
| ये कुन्दद्युतयः | १ | २५ | वियति विशद— | ३ | १८ |
| रक्तेनाक्तं विनि— | ५ | ७६ | विरचितपरिवेषाः | ५ | ५२ |
| रङ्गत्सङ्गे कुरङ्गाक्ष्या | ७ | ४४ | विवेकः सह संपत्त्या | ३ | १६ |

| मूलानि | उच्छ्वासः | श्लोकसंख्या |
|---|---|---|
| विश्राम्यन्ति न | ५ | ५ |
| विश्लेषाकुलचक्र— | ५ | ७५ |
| वीचीनां निचयाः | ५ | ४९ |
| वीरपुरुषं तदेत— | ६ | ६६ |
| वेदविद्योपमा देवी | ६ | ५३ |
| वेधा वेदनयाश्लिष्टो | ६ | १४ |
| व्यासः क्षमाभृतां | १ | १२ |
| शतगुणपरिपाटया | ६ | ५५ |
| शश्वद्बाणद्वितीयेन | १ | १४ |
| शिथिलितसकला | ५ | १५ |
| शुष्काङ्गी घनचार्वङ्ग्याः | ६ | ५१ |
| शृङ्गाररसभृङ्गार | २ | २५ |
| श्च्योतच्चन्दनचारु— | २ | ३५ |
| श्च्योतच्चन्द्रमणि— | ५ | १७ |
| षड्रसाः किल वैद्येषु | ७ | १४ |
| संगता सुरसार्थेन | १ | २४ |
| संगीतका त्वदौत्सुक्या— | ६ | ५० |
| संग्रहं नाकुलीनस्य | ४ | २० |
| संसाराम्बुनिधौ | ५ | २ |
| स एष निषधेश्वरः | ६ | ३६ |
| सकलविषयवृत्ती | ६ | ४४ |
| सत्काव्यश्चन्दनार्द्र | ६ | ७९ |
| सदाहंसाकुलं | १ | ३६ |
| सदूषणापि निर्दोषा | १ | ११ |
| सरलप्रियंगुणाढ्य | २ | १५ |
| सरसिजमकरन्दा— | ५ | ७० |
| सर्गव्यापारखिन्नस्य | ३ | २६ |
| सर्वेऽपि पक्षिणो हंसाः | ७ | २९ |
| सवृद्धबालाः काले | ४ | ११ |
| सांशुकोन्नतवंशस्य | ४ | १० |
| सा त्वं मन्मथमञ्जरी | १ | ६० |
| सानूनां सानूनां | ६ | ६५ |
| साप्यनेककलोपेता | ६ | ४९ |
| सालानकमनालान— | ६ | ५७ |
| सा समीपस्थितज्येष्ठा | ३ | २३ |
| सिच्यन्तां राजमार्गाः | ६ | ७८ |
| सिन्दूरस्पृहया | ३ | ७ |
| सुगमस्तवास्तु | ६ | ३३ |
| सुधापङ्कोपलिप्तेव | ७ | ३० |
| सुरसदननिवासं | ६ | ७७ |
| सुस्थिततेजोराशे— | ७ | १९ |
| सैषा चलच्चन्द्रकि— | ६ | २६ |
| सोच्छ्वासं मरणं | ७ | ४५ |
| सोऽयं क्रीडाचलो | २ | ७ |
| सोऽयं यस्तेन पान्थेन | ४ | ८ |
| सोष्णीषमूर्धा | ४ | १५ |
| सोऽहं हंसायितुं | १ | २१ |
| सौधस्कन्धतलानि | ७ | ३१ |
| स्कन्धशाखान्तरालेषु | ५ | ४६ |
| स्त्रीमाणिक्यमहाकरः | १ | ६१ |
| स्थित्वा त्वदागमन— | ६ | १८ |
| स्मरराजराजधानी— | ७ | २० |
| स्मर विहरणवेदीं | ६ | ७६ |
| स्वःसौन्दर्यविडम्बि | ६ | ७२ |
| हंहो हंसि चकोरि | ७ | ८ |
| हरचरणसरोजा— | ३ | ३५ |
| हरिति हरिणयूथं— | २ | ६ |
| हर्षादुत्पुलकं | ७ | ४८ |
| हर्षाद्बाष्पचिते | ७ | ३८ |
| हृद्योद्यानमरु— | १ | ६३ |
| हृद्योद्यानसर— | ५ | १८ |

# दमयन्तीकथायाः शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | शुद्धपाठः |
|---|---|---|
| ३ | ५ | परं |
| ४ | २५ | " कच बन्धे " |
| ६ | १५ | वाऽतिलाघवेन |
| ८ | १ | श्रीधरस्या— |
| | २५ | बन्धोऽपि दुष्कर |
| १० | १२ | गलग्रहो |
| ११ | ५ | सत्राणि |
| | २३ | " |
| | २८ | घनाः प्रचु |
| १२ | २६ | मामुतोऽभीक्ष्ण— |
| १४ | ८ | मित्रो |
| १८ | ८ | नगरी |
| | २१ | सर्वोऽपि विजिगीषुः |
| १९ | १ | विश्वामित्र |
| | १९ | विश्वामित्रो मुनिः |
| | २३ | शीलः। |
| २१ | १० | निरुपमानवायौवनश्रीः |
| २४ | ३ | नक्षत्रभूः क्षत्र— |
| | १९ | नक्षत्रेति |
| २५ | १ | मित्रं च |
| २७ | १० | मधु मकरन्द— |
| | २४ | याच्ञा |
| २८ | ३ | सुमित्रोपेतो |
| | १० | जगज्जेगीयमान |
| ३० | [illegible] | लोकोत्तरान् |
| ३८ | ८ | "अब्जश्री |
| | १[illegible] | भवन्ति" इत्येव |
| ३९ | ८ | "अस्ति स्वर्ग— |
| ४२ | ८ | विस्मृत |
| ४३ | ३ | "स्त्रीमा० |
| | १९ | व्यापारः'इ० |
| ५२ | ६ | श्रुतिसु— |
| ५३ | १९ | कुट्मल |
| ५८ | ६ | मुक्ताहारो |
| ६० | १८ | तथोक्ते अर्थाश्रिजाते |
| ६२ | १२ | राजीवपत्राक्ष |
| ६३ | ९ | मैत्रीभावः |
| ६४ | १ | सीतास— |
| ७० | २० | आनीताः |
| ७१ | १३ | भयाददर्शनं |
| ७२ | २३ | पुष्पाणि |
| ८५ | १६ | मैत्रीसुधायाः |
| ८९ | २१ | स्वभावादेव |
| ९० | ११ | यशोभाजन० |
| ९४ | ११ | खण्डित० |
| ९५ | २३ | भवने |
| ९६ | २३ | कुर्वन्ति |
| ९७ | २ | मुद्गान् |
| ९८ | ४ | अपराह्ण |
| | १५ | आवेदयत् |
| ११२ | १ | नलिनीवन० |
| ११५ | १८ | च्छेदः |
| १२० | ९ | उपदेशको |
| १२३ | ९ | सँस्त्वं |
| | २१ | वाणैः |
| १२४ | २५ | विवर्धनं |
| १२५ | २ | मित्रमण्डली |
| | ११ | मित्रम० |
| | २४ | देवैः |
| १२७ | २७ | पुत्राश्च पितृभ्यो |
| १२८ | ४ | कारणेऽभ्रान्तः |
| | १५ | श्रीपक्षे |
| १३१ | २५ | अतिशयं श्रियं |
| १३८ | १३ | प्राप्तमुदधेः |

| पृष्ठे | पङ्क्तौ | शुद्धपाठः | पृष्ठे | पङ्क्तौ | शुद्धपाठः |
|---|---|---|---|---|---|
| | १९ | "नूनमय | | २१ | कृत्वा |
| १३९ | १५ | चामीकर | २०० | १७ | चञ्चत्पुटादयो |
| १४० | ११ | श्रियम्" | २०२ | १० | मेषवृषमिथुनकुम्भकन्या रा-शिवि० |
| १४१ | ४ | श्रूयमाणेषु परितः | | १६ | साभोगता चे० |
| १४३ | २१ | ५९ | | २५ | पुण्डरीकैः |
| १४४ | ५ | इत्यभिधायेव—मुग्धे | २०३ | ४ | विन्ध्यस्कन्ध० |
| | १४ | श्राम्यति श्रोत्रे० | २०४ | ६ | गीत |
| १५१ | ८ | हंसी" | | १० | जनयति वनितानां |
| १५९ | ४ | श्च्योत० | | २० | मेखलाभुवि गिरिम |
| | १८ | श्च्योत० । | २०६ | ८ | "भानोः० |
| १६२ | १७ | मम" | | १४ | अपिच |
| १६४ | २१ | क्षैरेयीदधि० | २०७ | ८ | क्रीडागिरि० |
| १६८ | १ | पाणिनीया | २०८ | १० | भूषिताः ॥ २१ ॥" |
| | १३ | बहुमानयन् | २०९ | ३ | "त्वद्देशा० |
| १७२ | ३ | मुनीनां | | ११ | स्थीयते ॥ २३ ॥" |
| १७४ | १९ | परिसरेषु | २१० | १२ | पत्रालीर्दल० |
| १७६ | १० | तांश्चावलोक्य— | २११ | ५ | प्रयाणम् ॥ २५ ॥" |
| १७८ | १४ | सरस्वतीगीतप्र | | ६ | वासः |
| १८१ | १० | ग्यदारिद्र्यो | | १० | करीराङ्कुरान् |
| १८३ | १९ | यस्य" | | १५ | —नि" इति |
| | २१ | नीरङ्गया | २१२ | १ | हरिणी |
| | २३ | यथापिचेति समुच्चयः | २१६ | ४ | "विपिनो० |
| १८४ | १९ | पन्नगाङ्गना | २१७ | ५ | भाग्यपरम्परा" इति |
| १८५ | १३ | ललितगामिन्यः | २२० | १६ | द्रवार्द्रित— |
| १८७ | ५ | "जातिर्यत्र० | २२१ | १३ | आहारम्— |
| १८८ | २१ | तरुण्यः" | | १८ | तेन चेति । |
| १९२ | ३ | दीर्घ | २२२ | १० | "सकल० |
| | ८ | अवलम्बमानः | २२३ | ९ | नेदीयो |
| १९३ | १३ | स्तबकेषु, वास० | २२६ | १ | अनेकविधवक्रोक्ति |
| १९४ | १७ | उद्रिक्तः सन् | | ५ | "उपरम— |
| १९५ | १० | अपिच | | १३ | चक्रवाकः ॥ ५५ ॥" |
| १९९ | १८ | अतिविचित्रा चम्पक० | | | |

## शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | शुद्धपाठः | पृष्ठे | पङ्क्तौ | शुद्धपाठः |
|---|---|---|---|---|---|
| २२७ | १० | "धुतरज— | | ११ | सौख्येन च" |
| | १३ | कुचेषु ॥ ९९ ॥" | २४६ | १८ | "अनुगुण- - |
| २२९ | १६ | लक्ष्मीमृगा० | २४७ | ८ | किमिदं" |
| २३० | ६ | पुलकः, कुसु०निलैरुत्कम्प्य-<br>मानः | २५१ | १६ | दिष्टयाद्य वर्धी— |
| | | | | १ | "आज्यं० |
| २३१ | २२ | शुनः संज्ञावृ० | २५५ | १२ | मुज्यताम् ॥ १२ ॥" |
| २३७ | ५ | पादपाः" | २५६ | १० | "नोद्याने— |
| | ७ | 'प्रासाः कु० | २५९ | ५ | वन्द्यताम्–" |
| २३९ | ११ | नाममालासु, | | १० | रागिणि |
| २४० | २१ | उद्दण्डयतो गाढमुत्साहयतः | २६४ | १७ | अष्टमीशशाङ्कशक- |
| २४४ | ९ | सीमविषयः | | ५ | जगदभूत् ॥ २९ ॥" |
| | १४ | सर्वभावम् । | | ८ | "कन्यामन्या— |
| २४५ | २ | "आपूर्वापर | | ११ | पश्चिमाब्धिम् ॥ ३९ ॥" |



